# DÁYABHAGA

OR

# LAW OF INHERITANCE,

BY

# JIMUTAVÁHANA,

WITH A COMMENTARY BY

*Krishna Terkálankára.*

---

PUBLISHED UNDER THE AUTHORITY OF THE GENERAL COMMITTEE

OF

Public Instruction.

---

PRINTED AT THE EDUCATION PRESS.

---

1829.

# श्रीकृष्णतर्कालङ्कारकृतटीकासहितः

# श्रीजीमूतवाहनकृतोदायभागः

---

श्रीयुक्तकमिट्टिसाहेवानुज्ञया कलिकाता

राजधान्यां इडुकेशन् मुद्रायन्त्रालये

---

श्रीलक्ष्मीनारायणशर्म्मणा शोधितोमुद्रितश्च

सम्वत् १८८५ शकाब्दे १७५० ईसन् १८२९

## ॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥

॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥ 

अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥

## ॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥ 

॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥

## ॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥ 

॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥

॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥

 ॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥

॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥

 ॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥

१६ ॥ अथ जीमूतवाहनकृतदायभागस्य निर्घण्टपत्रं ॥



---

# ॥ दायभागः ॥

॥ श्रीगणेशाय नमः ॥ मन्वादिवाक्यान्यविमृष्य येषां यस्मिन्विवादो बहुधा बुधानाम्। तेषां प्रबोधाय स दायभागो निरूपणीयः सुधियः शृणुध्वम् ॥ १ ॥

पादाब्जे द्वे जगदम्बिकायाः श्रीकृष्णविप्रो हृदये निधाय।
करोति टीकामिह दायभागग्रन्थावबोधाय सदेकरम्याम्॥१॥

ग्रन्थारम्भे विघ्नविघाताय देवतानामोच्चारणरूपं मङ्गलमाचरन् शिष्यप्रवृत्त्यर्थमभिधेयप्रयोजनसम्बन्धांश्च प्रदर्शयन् दायभागमुद्दिशति । मन्वादीति । तथा चोक्तम् ज्ञातार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते । ग्रन्थादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥ अत्राभिधेयो दायभागः प्रयोजनं दायभागनिर्णयः स च संशयापनोदनद्वारा दुःखनिवृत्तिहेतुतया गौणः । सम्बन्धश्च ग्रन्थस्य दायभागेन सह ज्ञाप्यज्ञापकभावः तन्निश्चयेन सह जन्यजनकभाव इति । श्लोकार्थस्तु हे सुधियः यस्मिन् दायभागे येषां बुधानां बहुधा विवादः समन्विखला

पतनानन्तरं समुत्पन्नस्य सामुदायिकस्वत्वस्य विनाशेन प्रादेशिकस्वत्वानुकूलव्यापारो विभागः। किम्वा तदानीमुत्पन्नस्यैव प्रादेशिकस्वत्वस्य ज्ञापनं विभागः तथा मृतधनस्य पुत्रस्यैव पितुरेव पत्न्या एव वेति बहुप्रकारो विवादः तेषां बुधानां संशोधाय विशेषरूपेण दायभागस्य सम्बन्धिनां मध्ये व्यक्तिविशेषनिष्ठत्वेन प्राथमिकाधिकारस्यावधारणाय स दायभागो निरूपणीयः निरूपणार्हः। नच नायमुद्देशः किन्तु प्रतिज्ञेति वाच्यम् तथात्वे वक्ष्यमाणप्रतिज्ञान्तरानुपपत्तेः अतएव निरूपणीयइत्यनेन निरूपणस्य प्रतिज्ञेति साम्प्रदायिकव्याख्यानमसदित्यवधेयम्। शृणुध्वम् अत्र च निरूपणं लक्षणादिप्रकारेण ज्ञापनानुकूलवचनम् तदेव च निरूपणीयविशेषणतयोपस्थितं श्रवणक्रियायां कर्मतयाऽन्वेति योग्यत्वात्। नच श्रुधातोः श्रवणवाचित्ववत् शाब्दबोधवाचितापीति निरूपणीयस्यापि तद्योग्यत्वमस्ति कथमन्यथा आत्मा वारे श्रोतव्यो मन्तव्य इत्यादिश्रुतावात्मनः श्रोतव्यतेति वाच्यम्। सर्व्वत्र श्रावणबोधेनैव श्रुधातुना शाब्दबोधप्रतिपादनात् तत्र तस्य लाक्षणिकत्वात्। ननु सर्वेषामेव विरुद्धवचनानां मुनिवचनत्वेन प्रमाणत्वात् बहुधैव दायभागोऽस्तीत्यत आह मन्वादीति। अविमृश्य स्वबुद्ध्या तथाच तद्वचनानां शास्त्रबोधमूलकत्वेन न प्रामाण्यमितिभावः। श्रीकराचार्य्यादिपन्थादरपराहत

विवकानां पण्डितानां सुव्यक्तमेवार्थिकास्तत्सूत्रार्थयाथात्म्यता नास्तीति तेषां व्यावृत्तये सुधियइति सम्बोधनम् न्यायगृहीत शास्त्रार्थयाथात्म्यमेव सुधीत्वम् । अत्र मनोर्दैवतया तन्नामो त्कीर्त्तनरूपं मङ्गलं बोध्यम् । तथाचोक्तम्मेधातिथिना एतमेके वदन्त्यग्निं मनुमेके प्रजापतिम् । आङ्गरेके परं धर्ममपरे ब्रह्म शाश्वतमिति । स्वशब्दनिर्देशेन च मनोरादिशब्दनिर्दिष्टेतर स्मृतिकारेभ्यः प्राधान्यमावेदितं ग्रन्थकारेण । तेनस्मृत्यन्तरवि रोधे मनुस्मृतिरेव ग्राह्या अतएवोक्तम् मन्वर्थविपरीता या या स्मृतिर्न प्रशस्यते । वेदार्थोपनिबन्धृत्वात्प्राधान्यं हि मनोःस्मृ तमिति ॥ ० ॥

अथ दायभागोनिरूप्यते ॥ तत्र नारदः ॥ विभा गोऽर्थस्यपित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ॥ दायभागइति प्रोक्तन्तद्विवादपदं बुधैः ॥ ० ॥

निरूपणे शिष्यावबोधाय प्रतिजानीते । अथेति । उद्देशा नन्तरमित्यर्थः तेन न उद्देशलक्षणं परीक्षाचेति प्राप्तक्रम विरोधः निरूप्यते लक्षणप्रकारेण ज्ञाप्यते । तत्र दाय भागलक्षणप्रसङ्गे नारदइत्यस्य एकवचनान्ताव्याहर्त्तव्यया आहेति क्रिययाऽन्वयः विभागोऽर्थस्येति विभागः स्वत्वनिर्णयानु कूलोव्यापारः इत्यपि वक्ष्यते । तथाच पित्र्यस्यार्थस्य पुत्रैर्योवि

भागः पुत्रकर्तृकोविभागःस दायभागः स यत्र धने प्रकर्षेण कल्प्यते विभागिभिरेकमत्या मध्यस्थाद्यवलम्बनेन वा कल्प्यते तद्विवादपदमिति बुधैः प्रोक्तमित्यन्वयः। नचाष्टादशविवादपदगणनायां स्त्रीपुन्धर्मोविभागश्चेत्यनेन मनुना विभागस्यैव विवादत्वेन गणितत्वात् दायस्य चागणितत्वात् कथं दायस्य विवादपदत्वमिति वाच्यम् इदं हि विवादपदत्व पारिभाषिकम् किन्तुयौगिकम् दायभागविषयकविवादविषयत्वस्य दायेऽप्यवश्यंभावात् दायमविषयीकृत्य दायभागविषयकविवादासंभवादिति नारदवचनानुरोधेन मनुकृतविवादपदगणनायां विभागपदस्य कृदभिहितभावतया विभजनीयदायपरत्वे त्वनुपपत्तिलेशाभावाच्च। केचित्तु यत्रेति निमित्तसप्तमी यदर्थस्य विवादपदम्। तथाच यद्विवादपदनिमित्तम्पित्र्यस्यार्थस्य पुत्रैर्विभागोऽवपातः प्रकल्प्यते तद्विवादपदं दायभागइत्याहुः। यदर्थे यत्रेति सुपांसुपा साध्वित्यन्ये। परे तु यत्त्विति पाठः तदर्थस्य विभागक्रियाविशेषणमित्यूचुः। केचन पित्र्यस्यार्थस्येति निर्द्धारणे षष्ठीं वर्णयन्ति द्वन्द्वः सामासिकस्यचेतिवत् तथाच पित्र्यस्यार्थस्य मध्ये यस्मिन्नर्थे पुत्रैर्विभागः क्रियते स दायभागइति तेषां मते वचनार्थः अत्रापि मते धनस्य विवादपदत्वम्पूर्वोक्तरीत्या बोध्यमिति । यस्तु इत्येव पाठइत्यपरे ॥०॥

पितृत आगतम्पित्र्यम् । तच्च पितृमरणोपजातस्वत्वमुच्यते । पित्र्यस्येति पुत्त्रैरिति च द्वयमपि सम्बन्धिमात्रोपलक्षणम् तेन सम्बन्धमात्रेण सम्बन्धिधनविभागेऽपि दायभागपदप्रयोगात् अतएव दायभागं विवादपदमुपक्रम्य नारदोऽपि मात्रादिधनमप्युपदर्शितवान् ॥ ० ॥

ननु विभागात्प्रागेव पितुर्निधनादिना तदर्थेषु तत्स्वत्वापगमात्पित्र्यपदस्य पितुरिदमित्यर्थकल्पनायामयोग्यत्वमतो व्याचष्टे । पितृत इति ननु पितृत आगतमित्यस्य पितृस्वत्वनाशानन्तरमपरस्वत्ववदित्यर्थकत्वे पितृदत्तादेरप्येवम्पित्र्यत्वापत्त्या दायत्वापत्तिः । पितृधनविभागस्यैव दायभागत्वेन पित्र्यधनस्यापि दायत्वस्याभ्युपगमत्वादत आह तच्चेति पितृमरणेति पितृमरणादुपजातं स्वत्वं यच्च पितृमरणाधीनस्वत्ववदित्यर्थः । वस्तुतस्तु पितृस्वत्वनाशकालेऽपि पितृस्वत्वोपलक्षितबोधकतया पित्र्यपदं योग्यमेव पाकरक्ते घटे श्यामरूत्वादिप्रयोगवत् । अतएव विभजेयुर्धनम्पितुरित्यादिवचनान्यपि संगच्छन्ते । मरणपदञ्चात्र इतरस्वत्वाभिसन्धानापूर्व्वकस्वत्वापगमहेतुभूतव्यापारत्वरूपेण पातित्याश्रमान्तरप्रवेशादीनामप्युपलक्षणम् । पितृदत्तादौ तु स्वत्वन्न पितुर्मरणाधी

नम् किन्तु स्वस्वदायत्वाभिसन्धानपूर्वकत्यागादेव पितुरिति नातिप्रसङ्गः । केचित्तु पितृत्वागतमित्यत्र सम्बन्धात् स्वम् पितापुत्रभावसम्बन्धाधीनस्वत्ववदित्यर्थः तच्चेत्यादि तत्तत्प रिचायकमित्याहुः । पौत्रादिभिः क्रियमाणस्य पितामहादि धनविभागस्य दायभागत्वोपपादनायाह पित्र्यस्येतीति । सम्बन्धिमात्रेति तथाच पितृपदस्य पुत्रपदस्य च सम्बन्धि लाक्षणिकतया पितामहादिधनस्यापि सम्बन्ध्युपरमजातस्वत्व वत्त्वात् तद्विभागस्य सम्बन्धिकृतत्वाच्च दायभागत्वमक्षुण्णमिति भावः । पुत्रैरिति बहुत्वकर्त्तृत्वं चाविवक्षितम् तेन द्वयो र्विभागे मध्यस्थक्रियमाणे गर्भस्थविभागे च नाव्याप्तिः । ननु पितामहादिधनविभागेन दायभागः प्रमाणाभावात् तदा कथन्तत्संग्रहाय लक्षणेत्यतस्तत्र प्रमाणमाह सम्बन्धमात्रे णेति शब्दप्रयोगस्य मुनिविरोधात् लक्षणयाप्युपपत्तेराह अतएवेति सम्बन्धिमात्रधनविभागस्यापि दायभागत्वादेवे त्यर्थः अन्यथा पितृधनविभागस्यैव दायभागत्वे दायभाग विवादपदोपक्रमे मात्रादिधनविभागकथनस्याप्रस्तुताभिधान त्वापत्तेरितिभावः ॥ ० ॥

तथा मनुरपि । पित्रादिपदमदत्त्वैव । एषस्त्री पुंसयोरुक्तो धर्म्मोवारतिसंहितः। आपद्यपत्यप्राप्तिश्च

दायभागं निबोधत ॥ इत्युपक्रम्य यावत्सम्बन्धि धनमुक्तवान् । दीयतइति व्युत्पत्या दायशब्दो ददातिप्रयोगश्चगौणः ॥ ८ ॥

ननु नारदेन दायभागोपक्रमे पितृधनविभागएवोक्तो मात्रादिधनविभागस्य च प्रासङ्गिकमेवाभिधानं अन्यथा श्लोक विरोधः स्यादिति कथं मात्रादिधनविभागस्य दायभागत्वमि त्यतआह । तथा मनुरपीति पित्रादिपदमदत्त्वैवेति तथाच नारदेन पितृधनविभागस्य पृथगुक्तत्वात् मात्रादि धनविभागकथनस्य तत्प्रासङ्गिकत्वसम्भवेऽपि मनुना दायभागो पक्रमे पित्रादिपदानन्तर्भावेणैव यावत्सम्बन्धिधनविभाग श्लोकैः सम्बन्धिधनविभागस्यैव दायभागत्वमिति भावः । नच नारदानुरोधान्मनुस्मृतेः संकोचोऽस्तु इति वाच्यम् । मनोर्ब्बलवत्त्वात् । रतिसंश्रितः अन्योऽन्यानुरागयुक्तः आपद्य पत्यप्राप्तिः क्षेत्रजादिपुत्रकरणम् । ननु सम्बन्धिधनविभागो दायभागइत्युक्तन्तच न सम्भवति भावकृदन्तदायशब्दस्य त्यागमात्रबोधकतया सम्बन्धिधनाबोधकत्वादित्यतआह । दीयतइति । तथाच दायशब्दस्य दीयते यत्तद्दायइति कर्म्म व्युत्पन्नतया कर्म्मकृतैव धनबोधइति भावः । ननु तथाप्यनुप पत्तिः कर्म्मकृता धात्वर्थस्य कर्म्मणएव बोधनात् धात्वर्थस्य

प्रकृते त्याग एव मृतप्रव्रजितादिपुत्रादीनान्तदानीन्त्यागाभा
वेन त्यागकर्मत्वेन तद्धनबोधनासम्भवात् अत आह ददाति
प्रयोगस्त्विति दाधातुस्त्वित्यर्थः चकारः पुनरर्थः गौणइति।
शक्यस्य सादृश्यात्मकः सम्बन्धोगुणः तदधीना या लक्षणा
सा गौणी तद्योगाद्गौणइत्यर्थः तथाच पूर्व्वस्वामिस्वत्व
निवृत्तिपरस्वामिस्वत्वोत्पत्तिफलकत्यागत्वेन रूपेण त्याग
शक्तस्य दाधातोः पूर्व्वस्वामिस्वत्वनिवृत्तिपरस्वामिस्वत्वोत्पत्त्यनु
कूलव्यापारत्वेन पित्रादिमरणप्रव्रज्यादिसाधारणेन रूपेण
लक्षणा सम्बन्धिनिधनाद्यनन्तरं मरणादिरूपतादृशव्यापार
जन्यं यत्पूर्व्वस्वामिस्वत्वनिवृत्तिपरस्वामिस्वत्वोत्पत्तिरूपम्फल
द्वयन्तच्छालित्वरूपं कर्मत्वमक्षतमेवेति नानुपपत्तिरिति भावः।
एतेन मरणादेर्ददात्यर्थत्वं तच्च दाधातोर्गौणता । तच्च
स्वत्वस्यानवच्छेदकतया च धनस्यापि न कर्मत्वम् धात्वर्थता
वच्छेदकफलशालिन एव कर्मत्वादिति धात्वर्थजन्यफलभागि
त्वमात्रेण प्रत्ययस्यापि गौणता चकारः समुच्चये इत्याचार्य्य
चूडामणिमतं प्रत्युक्तम्। धातोर्निरूढरूपेण लक्षणायां स्वत्वस्य
धात्वर्थतावच्छेदकत्वेन तच्छालित्वरूपकर्मत्वस्य निष्प्रत्यूह
त्वादिति ॥०॥

मृतप्रव्रजितादिस्वत्वनिवृत्तिपूर्व्वकपरस्वत्वोत्पत्ति
फलसाम्यात् न तु मृतादीनान्तत्र त्यागोऽस्ति तच्च।

पूर्व्वस्वामिसम्बन्धाधीनन्तत्स्वाम्योपरमे यत्र स्वत्वं तत्र निरूढो दायशब्दः ॥ ० ॥

गुणमाह। मृतप्रव्रजितादीति। स्वाम्यादिति। शक्यलक्ष्ययोरुक्तरूपत्यागतथाविधव्यापारयोर्मृतप्रव्रजितादिस्वत्वनिवृत्तिपरस्वत्वोत्पत्तिरूपोभयफलानुकूलव्यापारत्वरूपसादृश्यादित्यर्थः लक्षणाहेतुं मुख्यार्थबाधमाह। नतु मृतादीनामिति। तत्र धने सप्तम्यर्थो विषयत्वम्। तस्य त्यागेऽन्वयः। त्यागो न ममेदमितीच्छारूपः। दायशब्दस्य पर्य्यवसितार्थमाह। ततश्चेति। क्रीतादावतिव्याप्तिवारणायाधीनान्तम्। अत्र च पूर्व्वस्वामीत्यविवक्षितम्। सम्बन्धाधीनत्वस्यैव व्यावर्त्तकत्वात्। सम्बन्धश्च शास्त्रप्राप्तपुत्रत्वाद्यन्यतमः नतु क्रेतृत्वादिः क्रयस्य सम्बन्धाधीनस्वत्वं प्रति हेतुत्वात्। किन्तु क्रयाधीनस्वत्वंप्रत्येव तस्य क्रयस्य हेतुत्वादिति। विद्यमानपतिस्वत्वके दाम्पत्यसम्बन्धाधीनपत्नीस्वत्वाश्रयेऽतिव्याप्तिवारणाय। तत्स्वाम्योपरम इति। तथा च तावदन्यतमसम्बन्धाधीनं सत् यत्पूर्व्वस्वामिस्वत्वनाशजन्यस्वत्वन्तदिति धने निरूढो दायशब्द इत्यर्थः॥ ननु स्वत्वनाशानन्तरं चेत्स्वत्वोत्पत्तिस्तदा तत्क्षणेऽस्वामिकतया निध्यादिवदुदासीनस्याप्युपादानात् स्वत्वापत्तिरिति चेन्न। तत्र पुत्रादिसत्ताया एव विरोधित्वस्य पुत्राद्यधिकारबोधकशास्त्रसिद्धत्वात्।

नच पित्रा विक्रीतेऽपि पुत्रस्वत्वापत्तिः इतरस्वत्वाभिस न्धानापूर्व्वकपितृस्वत्वापगमहेतुव्यापारजन्यपितृस्वत्वनाशस्यैव सम्बन्धाधीनं विजातीयं पुत्रस्वत्वं प्रतिहेतुत्वात्। तादृशस्वत्व नाशस्य च स्वत्वेच्छाधीनपितृस्वत्वनाशत्वेन हेतुता नतु तद्रूपेण गौरवात्। पित्रा पुत्राय दत्तन्तु यद्धनन्तत्र पुत्रस्य स्वत्वन्न सम्बन्धाधीनम्। किन्तूदासीनस्यैव दाना धीनम्। अतोन तत्र तादृशपितृस्वत्वनाशस्य व्यभिचारः। अत एव तद्रूपं धनं न दाय इति। वस्तुतस्तु पितृस्वत्वमेव पुत्रस्वत्वो त्पत्तौ हेतुः नचैवम्पितृस्वत्वे विद्यमानेऽपि तद्धने पुत्रस्वत्वा पत्तिः। तत्र पितृस्वत्वनाशकस्यापि सहकारित्वात्। स्वत्वनाश कञ्च मरणपातित्यादि तेषां स्वत्वनाशकत्वेन स्मृतिप्रतिपादि तानां मरणत्वपातित्यत्वाविशेषरूपेणैवाव्यवहितोत्तरत्वाद्यन्त र्भावेन पुत्रस्वत्वोत्पत्तौ हेतुत्वम्। तेन नपरस्परव्यभिचारः। अतएव। विनष्टे वाप्यशरणे इत्यादिवचनैः पितुः पातित्याद्य नन्तरमेव पुत्रस्वत्वमिति प्रतिपादनम्। एतेन पितृस्वत्वनाश कानां मरणादीनां तेन तेन रूपेण हेतुत्वं स्वत्वनाशकत्वेन स्वत्व नाशसामग्रीत्वेन वा। नाद्यः अनेककार्यकारणभावकल्पने गौर वात् न द्वितीयः। जीवत्यपि पितरि पुत्रस्य स्वत्वं स्यात्। स्वत्वा दृष्टादीनामनाशकानां सत्त्वात्। तृतीये चान्यं प्रतिपूर्ववर्त्तित्वं गृहीत्वैव यस्य यत्स्वत्वं प्रति पूर्ववर्त्तित्वं गृह्यते इत्युक्तान्यथा

सिद्धेः। सामग्रीभेदेन नानाकार्य्यकारणभावकल्पने गौरवाच्च तदपेक्षया वाग्रहेतुतायाएव लघुतया युक्तत्वादित्यादिकमयुक्तम्। प्रव्रज्यामरणपातित्यानां त्रयाणां कार्य्यकारणभावत्रयकल्पनामपेक्ष्य अन्यदीयोपादानिकस्वत्वत्रित्वादिभेदकूटविशिष्टपुत्रसत्तायास्तथाविधपौत्रादिसत्तायाश्च प्रतिबन्धकत्वकल्पनायामेव गौरवात्। नचावश्यकत्वान्मरणादीनामेव हेतुत्वमस्तु नतु पितृस्वत्वस्यापीति वाच्यम्। तथासति सम्बन्धाधीनस्वत्वधारावारणाय तथाविधस्वत्वस्य समानजातीयस्वत्वं प्रति प्रतिबन्धकत्वकल्पनागौरवापत्तेः। उत्पत्तिसम्बन्धेन मरणादेर्हेतुतया नधारापत्तिरिति चेन्न। उत्पत्तेराद्यक्षणसम्बन्धरूपतयाऽननुगमेन कार्य्यकारणभावानन्त्यप्रसंगात्सम्बन्धाननुगमस्यादोषत्वादिति सिद्धान्तस्य चमन्त्रपाठमात्रत्वात् प्रकारभेदेन च व्यापकताभेदस्यावश्यकत्वात्। मन्मतेतु सम्बन्धिस्वत्वस्य हेतुत्वात्तदभावादेव तद्द्वारापादानस्यासम्भवइतिसुधीभिर्विभावनीयम्। स्वत्वञ्च यथेष्टविनियोगार्हत्वेन शास्त्रबोधितत्वमिति प्राञ्चः। अतिरिक्तः पदार्थइतिशिरोमणिः स्वामित्वञ्च तन्निरूपकत्वं निरूपकतया तदेवच द्रव्यगतम्। गुणगतञ्च द्रव्यस्य दानादिश्रुतेः नीलस्वाद्युपमुत्सृजेदित्यादौ लौहित्यादिगुणविशिष्टपारिभाषिकनीलवृषोत्सर्गश्रुतेश्च। वस्तुतस्तु आत्मसमवेतं स्वामित्वमतिरिक्तः

पदार्थ. विक्रयदानादीनां तन्नाशकत्वे क्रयप्रतिग्रहादीनाञ्च तद्धेतुत्वे सम्बन्धलाघवात्। तदेव निरूपकतया स्वत्वव्यवहार हेतुः अतएव निबन्धादौ भाविन्यपि स्वत्वम्। अन्यथा प्रतिमासमतिवर्षं वा देयत्वेन प्रतिश्रुतधान्यादिरूपस्य तस्य भावित्वे तत्र तदुत्पत्त्यनुपपत्तेरिति चूडामणिलीलावती रहस्यविदः समीचीनः पन्थाः। अत्र स्वत्वधारावारणाय सजातीयस्वत्वप्रति स्वत्वं विरोधि। सजातीयेति करणाच्च। पराजितनृपतिराज्यान्तर्वर्त्तितत्पुरुषीयक्रमागतस्थावरादौ जयादिना जेतुर्नृपतेः करग्रहणोपयोगिस्वत्वोत्पादे तथा क्रेतुः प्रतिग्रहीतृराज्यान्तर्वर्त्तिनि तादृशस्थावरादौ क्षेत्रादेः क्रयाद्यधीनस्वत्वोत्पादेऽपि न व्यभिचार इति संक्षेपः ॥०॥

ननु किन्दायस्य विभागो विभक्तावयवत्वं यद्वा दायेन सह विभागोऽसंयुक्तत्वं। न तावत्पूर्व्वः दायविनाशापत्तेः ॥ नापि द्वितीयः। संयुक्तेपिनममेदं विभक्तं स्वं भ्रातुरिदमिति प्रयोगात्। नच सम्बन्धाविशेषात्सर्व्वेषां सर्व्वधनोत्पन्नस्य स्वत्वस्य द्रव्यविशेषे व्यवस्थापनं विभागइति वाच्यम्। सम्बन्ध्यन्तरसद्भावप्रतिपन्नस्य सम्बन्धस्यावयवेष्वेव विभागव्यङ्ग्यस्वत्वापादकत्वात्। इतरथा पितृधनगतस्वत्वोत्पादविनाशकल्पनागौरवात् ॥०॥

दायं निरूप्य भागं निरूपयितुम्पृच्छति । नन्विति । नारदेन विभागभागयोरेकत्वप्रतिपादनादाह । विभाग इति । दाय विनाश इति । आरम्भकसंयोगप्रतिबन्धिनावयवद्वयविभागेना समवायिकारणस्यारम्भकसंयोगस्य नाशात् द्रव्यनाशापत्तेरि त्यर्थः । इदमुपलक्षणम् । अविभक्ते सखण्डेऽपि तत्स्वात् । अख ण्डेऽपि विभक्ते तदसत्त्वाच्चेति द्रष्टव्यम् ॥ संयुक्तेऽपीति । संयुक्तेऽपि वस्तुनि इदं वस्तु विभक्तं भ्रातुःस्वं न ममेति प्रयोगादित्यर्थः । यद्यपि इदं विभक्तमिति प्रयोगस्यैवापेक्षितत्वेन भ्रातुः स्वं न ममेति कथनमनुपयोगि तथापि वैशेषिकव्यवहारस्य विभागा धीनत्वात् । तच्च विभक्तत्वस्यावश्यम्भावप्रतिपादनार्थं तत्कथन मिति । सम्बन्धाविशेषादिति । स्वत्वहेतोः सत्पुत्रत्वादिसम्बन्धस्य सकलपुत्रादिसाधारण्यादित्यर्थः । सर्वधनोत्पन्नश्चेति । सस्य श्रीर्हरिरितिवत् सामान्याश्रयणादेकवचनम् । द्रव्यविशेषे एकैकस्मिन्नंशे व्यवस्थापनं अंशान्तरव्यावृत्त्या व्यवस्थापनं । एतेन स्वत्वमाति पुरुषभिन्नमिति प्रतिपादितं । तेन साधारणे सर्वेषां स्वत्वमेकमेवेति भ्रमनिरासः सामुदायिकस्वत्वविनाश नन्तरदंशीयवैशेषिकस्वत्वभूतव्यापार इतिवार्थः तेन समवेतस्व त्वस्य विद्यमानसत्ताश्रयत्यागरूपव्यावृत्त्यसम्भवेऽपि न क्षतिः । सम्बन्ध्यन्तरेति । तुल्याधिकारिसम्बन्ध्यन्तरेत्यर्थः । तेन मृत पितृकपौत्रादिसद्भावस्य संग्रहः जीवत्पितृकपौत्रादिसद्भावस्य

श्चासंपत्तः सम्बन्ध्यन्तरसद्भावः प्रतिपत्तः स्वजन्यफलविरोधी यस्य तादृशस्य पुत्रत्वादिरूपसम्बन्धस्य अवयवेष्वेव एकैकस्मिन्नंश एव स्वत्वोत्पादकत्वादित्यर्थः कस्य कुत्रांशे स्वत्वमित्यत्र निर्णायकमाह । विभागव्यञ्जनेति । तथाच । यदंशे यस्य स्वत्वं तदंश एव तस्य गुटिकापात इति नियम इत्यभिप्रायः । विभागस्य च व्यञ्जकत्वेन तदभावादेव न विभागात्पूर्वं विशेष निश्चयेन तत्पुरुषीयत्वप्रत्यय इति भावः । ननु सम्बन्ध्यन्तर सत्तायाःसामान्यत एव सम्बन्ध्यन्तरस्वत्वविरोधित्वे कुत्राप्यंशे कस्यापि स्वत्वन्नोत्पद्यते विरोधिसत्त्वादिति चेदत्र ब्रूमः । सम्बन्धाधीनस्वत्वप्रागभाववत्त्वप्रत्यासत्त्या सम्बन्ध्यन्तरस्वत्वस्यैव सम्बन्ध्यन्तरीयस्य सम्बंधाधीनस्वत्वम्प्रतिविरोधित्वं विभागानन्तरं प्रादेशिकस्वत्वत्व भवतामप्यभ्युपेयत्वेन तत्प्रागभावस्य सत्त्वादिति नानुपपत्तिरिति । सम्बन्ध्यन्तरसत्तायाःप्रतिबन्धकत्वे प्रमाणमाह । तत्त्वेति । सकलपित्रादिधनगतसम्बन्धिसमसंख्य सामुदायिकस्वत्वानि तेषामुत्पादविनाशास्व एतावदनन्तपदार्थकल्पनापेक्षया प्रतिबन्धकल्पनस्यैव लघुत्वादिति भावः ॥०॥

यथेष्टविनियोगफलाभावेनानुपयोगाच्च ।
उच्यते। एकदेशोपात्तस्यैव भूहिरण्यादावुत्पन्नस्य स्वत्वस्य विनिगमनाप्रमाणाभावेन वैशेषिकव्यव

हारानर्हतया अव्यवस्थितस्य गुटिकापातादिना व्यञ्जनं विभागः ॥ ० ॥

प्रमाणसत्त्वे गौरवमप्यकिञ्चित्करं कथमन्यथाऽदृष्टकल्पनम नः प्रमाणाभावमाह । यथेष्टेति । यथेष्टविनियोगरूपफलानुमेयमिह स्वत्वम् । समुदाये कस्यापि सम्बन्धिनस्तदभावे न कथन्तत्कल्पनमितिभावः । अविनियुक्ते विनष्टे च ममेदं विनष्टमिति प्रतीतिबलादुन्नेयमिति । इदमुपलक्षणं । विभागस्य स्वत्वहेतुत्वे स्वत्वनाशकत्वे चप्रमाणाभावात् । एकपुत्रसत्त्वे व्यभिचाराच्च तत्रावश्यकल्पनीयकारणान्तरादेवान्यत्रापि निर्वाहे नान्यथासिद्धेश्च । एवं विभागस्य स्वत्वनाशकत्वे चौरैर्विभज्य गृहीते धने धनिनः स्वत्वनाशापत्तिरित्यपि बोध्यम् । उच्यतइति । भूहिरण्यादावुत्पन्नस्य एकदेशोपात्तस्य तत्तदंशावच्छिन्नस्य विनिगमना इदममुकस्य नान्यस्येत्यवधारणरूपा तत्प्रमाणाभावेन वैशेषिकव्यवहारः परस्परनैरपेक्षेण दानविक्रयादिलक्षणस्तदनर्हतया व्यवस्थितस्य सतोऽप्यसत्कल्पस्य गुटिकापातादिना व्यञ्जनं इदममुकस्येत्यवधारणं विभागइत्यर्थः।आदिना उभयसम्मतमध्यस्थवचनादिपरिग्रहः अत्र एकदेशोपात्तेत्यादिकं स्वरूपकथनमात्रं नतु विभागपदार्थकोटौ तत्तद्रूपेण तेषां निवेशः विभागपदार्थस्तु पूर्व

स्वामिस्वत्वनाशजन्यतत्सम्बन्धाधीनसमुत्पन्नस्वत्वावधारणमात्र मिति । अतएव सम्भूय वणिजां समुदायधनविभागोऽपि दाय भागः तेषामर्जनाधीनस्वत्वस्यैव विभागेनावधारणमिति । अस्मिन्नर्थे च विभागपदस्य योगाभावात् रूढिरेवेति बोध्यम् । नन्वेवं रूढिकल्पने गौरवं एवमपि पितृकृतविभागेऽव्याप्तिश्च तत्र पुत्राणां प्रागुत्पन्नस्वत्वाभावेन निरुक्तविभागत्वासम्भवात् । न च तत्र विभागपदं स्वत्वावधारणत्वरूपगुणयोगाद्गौणमेवेति वाच्यं । मुख्यत्वे सम्भवति गौणत्वस्यान्याय्यत्वादत आह ॥ ० ॥

विशेषेण भजनं स्वत्वज्ञापनं वा विभागः । यत्रापि चैकन्दासीगवादिकं बहुसाधारणन्तत्रापि तत्त त्कालविशेषे वहनदोहनफलेन स्वत्वं व्यज्यते ॥ ० ॥

विशेषेणेति । पुरुषविशेषनिरूपितांशविशेषनिष्ठत्वेनेत्यर्थः । स्वत्वज्ञापनमिति । स्वत्वज्ञापनानुकूलव्यापारो गुटिकापातादि रित्यर्थः । दायभागपदे तु व्युपसर्गाभावेऽपि धातूनामनेकार्थ त्वाद्भजतिरेव केवलो विशिष्टार्थमभिधत्त इति । एवञ्च भजत्यर्थै कदेशे ज्ञाने व्युपसर्गार्थस्य प्रकारितयाऽन्वयात् विशेषेण स्वत्वज्ञानानुकूलव्यापारलक्षणो विभागः शक्तिलभ्य एवेति न रूढिकल्पना नवा पितृकृतविभागेऽव्याप्तिरिति । तस्मिंश्च कथ्ये

यन्मूल्यवत्त्विशान्वनविभागेऽपि विभागत्वमस्त्येव। किन्तु स न दायभागः तद्धनस्य दायत्वाभावादिति बोध्यम्। ननु यत्रैकैव दासीगवादिव्यक्तिर्वा पितृसम्बन्धिनी तस्यां परस्परविरोधेन कस्यापि स्वत्वन्नस्यात् तथा च तद्विभागो न दायभागः स्यादत आह। यत्रेति। कालविशेषे व्यवस्थापितर्द्विचिदिनादौ वस्त्र-मन्दोहनं वा फलं यस्य तादृशेन प्रथमं दिनद्वयं त्र्यादिर्वा ज्येष्ठस्य च तदनु तावद्दिनन्तदनुजस्य एवं चापरापरमपरा-परस्येति मध्यस्थवचनेन स्वत्वं ज्ञाप्यत इत्यर्थः। तथाचैकस्या-मेव व्यक्तौ कालिकाव्याप्यवृत्तीनि नानास्वत्वानि स्वामित्वसम्प-णानि सर्वेषु पुत्रेषु प्रागुत्पन्नानि तेषाञ्चैकैकस्यानन्तरभावि-मध्यस्थवचनेन स्वत्वं व्यज्यते कालविशेषेण तत्तद्व्यक्तिनिष्ठत्वेनाव-धारणमिति। तत्र तादृशमध्यस्थवचनमेव विभागोऽव्याहत इतिभावः। कालभेदेन स्वत्वञ्चेत्प्रागुत्पन्नप्रमितं स्यात्तदा तत्प्रतिपादकमध्यस्थवचनमपि विभागः स्यादतः कालभेदेन तथाविधस्वत्वे प्रमाणमाह ॥ ० ॥

तदाह वृहस्पतिः। एकां स्त्रीं कारयेत्कर्म्म यथांशेन गृहे गृहे। उत्पद्भृ कूपवाप्यम्भस्त्वनुसारेण गृह्यते युक्त्या विभजनीयन्तदन्यथाऽनर्थकं भवेत्। इदं श्लोकार्द्धत्रयं नानास्थानस्थं ननु क्रमिकम् ॥ ० ॥

एकां स्त्रीमिति। यथांशेन भागित्वमसंख्यमासदिवसार्ध शेन। तथा च कालभेदेन कर्म्ममात्रविधानात्कालभेदेनैव तत्र सर्व्वेषां स्वत्वमागुत्पन्नमिति प्रतिपादितत्वेऽप्येकस्य एकमेवाव्याप्यवृत्ति स्वत्वमनुनाशोऽनन्तस्वत्वतदुत्पत्तिविनाशकल्पनागौरवादिति। अनुसारेण स्वत्वप्रयोजनानुसारेण। नतु परिमाणसाम्येन। ननु यथैकस्मिन् सुवर्णादावंशभेदेन स्वत्वमभ्युपयते तथैकस्यामपि दासीगवादिव्यक्तौ अंशभेदेन स्वत्वमभ्युपेयतामत आह। युक्त्येति। युक्तिश्च प्रयोजनसापेक्षतया वैशेषिक यथेष्टविनियोग एव विभागप्रयोजनत्वं चावयवविभागस्यासम्भवि अवयवानां स्वातन्त्र्येण यथेष्टविनियोगानर्हत्वात्। निरर्थक एव विभागः स्यादित्याह। अन्यथेति। इदमुपलक्षणं। अवयविनो निधित्वापत्तिरेवं न कस्यापीति व्यवहारापत्तिश्च द्रष्टव्या। तथा चानायत्या कालभेदेनैव स्वत्वमिति सुवर्णादौ मात्र स्वातन्त्र्येण विनियोगार्हत्वात्तत्र देशभेदेनैव स्वत्वमिति। ननु तत्कालस्वामिना विक्रीते वस्तुनि कालान्तरस्वामिनामनुमतिमन्तरेणापि तत्र क्रेतुः सार्वकालिकस्वत्वापत्तिरिति चेन्न। विक्रेतुर्यादृशं स्वत्वं क्रेतुस्तादृशमेव स्वत्वं क्रयाज्जायते एवञ्च क्रेतुर्विक्रेतुः स्थानीयतयाऽन्यैः सह तद्वस्तुनः पर्य्यायेण विनियोग इति। अतएव राज्यान्तराधिकारिणः सकाशान्नृपतिना क्रीते राज्यान्तरादौ विक्रेतुः स्वत्वसजातीयं करग्रहणोपयोगि

स्वत्वमेव तस्य जायते न तु दायप्रतिगृहीतभूम्यादिवृत्तिस्वत्व सजातीयस्वत्वं तत्र भूम्यादौ तथाविधस्वत्वसत्त्वे मतद्विरोधात्तादृशस्वत्वान्तरोत्पत्त्यसम्भवात् । समानजातीययोस्तयोर्विरोधादिति । एतत्श्लोकार्द्धद्वयस्य संहितायां क्रमेणादर्शनात् । अमूलत्वशंकामपनेतुमाह । इदमिति । यच्चात्र स्मार्त्तेन दूषणमभिहितं अविभक्तभ्रात्रोरेकेन भ्रात्रा साधारणाश्वयोरेकतरमादाय धनमर्जितन्तत्रार्जितधनेऽर्जकस्य द्वावंशौ अपरस्यैकांश इति सर्व्वसम्मतः तत्र यदि गुटिकापातादिना पश्चादर्जकेन सोऽश्वो लब्धस्तदा प्रागर्जकस्यैव सोऽश्व इति तेनार्जितधने कथं भ्रात्रन्तरस्य भागः । यदि चान्यार्जकेन लब्धस्तदा समभागो युक्तः एकस्य स्वायासेन अपरस्याश्वायासेन अर्जितत्वादिति तदसत् । प्रादेशिकस्वत्ववादिमतेऽविभक्तस्यैव साधारणपदार्थत्वादिति सामान्यस्वत्वानभ्युपगमे तादृशस्य सामान्यविधस्यासम्भवात् । अतस्तदुक्तदोषासम्भवादिति सुधीभिर्भाव्यम् । तत्र हरिनाथमिताक्षरावाचस्पतिमिश्रप्रभृतयः यत्र यस्य स्वत्वं तत्रैव तस्य गुटिकापात इत्यत्र प्रमाणाभावात् दुर्विभक्तत्वेन पुनर्गुटिकापातविसम्वादाच्च । किञ्च । एकत्रैवोत्पन्नशस्यानां यथांशक्रमेण ग्रहणन्तत्र किमवच्छेदेन स्वत्वं जायते न शस्यावच्छेदेन शस्यानां तदानीमजातत्वात् । किञ्च । एकेन गवा कृष्टभूम्यादेर्यत्र शस्यविभागस्तत्र किमवच्छेदेन गवि

स्वत्वं सख्यादेस्तत्सम्बन्धश्च । तत्सम्बन्धोऽप्यवच्छेदकः । किञ्च । सम्बन्धसाम्यात्सर्वेषां सर्व्वत्र स्वत्वोत्पत्तौ बाधकाभावात् प्रागभावादृष्टादीनां विशिष्य हेतुत्वाभावात् । सम्बन्ध्यन्तर सत्तायाः प्रतिबन्धकत्वे गौरवात् । नच सामान्यस्वत्वोत्पत्ति विनाशकल्पनागौरवं प्रामाणिकत्वात् । एकस्यां दास्यां दशानां स्वत्वे चिरदिनात्परं स्वत्वनाशतदुत्पत्तिकल्पनायां विपरीतगौरवाच्च विभागस्य स्वत्वनाशकत्वं तद्धेतुत्वञ्च पितृकृतविभागे कृतमित्याहुः । विभागः प्रागुत्पन्नस्वत्वज्ञापकः स्वत्वजनको वेति मतद्वयोपरि माध्यमिकः शंकते ॥ ० ॥

ननु । पितर्य्यूर्द्ध्वं गते पुत्रा विभजेयुर्द्धनम्पितुरिति वचनात् । पितुरूर्द्ध्वं विभजेयुरित्यन्वयात् । विभागात्पूर्व्वं न तत्र पुत्राणां स्वत्वं नच विभागस्य स्वत्वकारणता असम्बन्धिधनेप्यतिप्रसङ्गात् ॥ ० ॥

नन्विति । न पुत्राणामिति । पितुर्द्धनमिति षष्ठ्या बोधित पितृस्वत्वस्य प्रतिबन्धकत्वात्तथा च प्रागुत्पन्नस्वत्वज्ञापको विभाग इति न सम्भवतीति भावः । द्वितीयमतमाशङ्क्य निषेधयति । नचेति । स्वत्वकारणता इत्युपलक्षणं पूर्वस्वत्वनाशकतेत्यपि बोध्यम् । असम्बंधीति । उदासीनैरसम्बन्धिधने

गुटिकापातादौ कृते तत्र स्वामिस्वत्वनाशोदासीनस्वत्वयोः प्रसंगादित्यर्थः । नच सम्बन्धिधनस्वत्वमत्येवास्यकारण मिति वाच्यं सुप्तस्य जीवतः पितुर्धने पुत्रैर्बलाद्विभागे तदा पत्तेः विभागात्पूर्वम्पुत्राणां स्वत्वव्यवस्थापनेनैव स्वमतसिद्ध विभागस्य निष्प्रत्यूहतेति तत् व्यवस्थापयति ॥ ० ॥

उच्यते। पित्रादिनिधनानन्तरमेवास्मदीयन्ध नमिति प्रयोगात्। एकपुत्रे चविभागं विनैव स्वत्व स्वीकाराच्च । सम्बन्धिनिधनमेव स्वत्वकारणमतो नातिप्रसंगः। नन्वर्जयितृव्यापारोऽर्जनम् । अर्ज नाधीनस्वामिभावश्चार्जयिता तेन पुत्रव्यापारोजन्मै वार्जनं युक्तम्। अतोजीवत्येव पितरि पुत्राणं तत्र स्वत्वन्तु तन्निधनात्। अतएवोक्तम् । क्वचिज्ज न्मैव यथा पित्र्ये धने। नैतन्मन्वादिविरोधात्॥०॥

उच्यतइति। पितृनिधनानन्तरमित्यत्र निधनपदं इतर स्वत्वाभिसन्धानापूर्व्वकस्वस्वत्वापगमहेतुभूतव्यापारोपलक्षकं एवमुत्तरत्रापि बोध्यम्। ननु विभागएव सम्बन्धिनाक्रियमाणः स्वत्वहेतुरतोनासम्बन्धिधनेऽतिप्रसङ्गः तस्य च सम्बन्धिनिधन पातित्याश्रमान्तरप्रवेशाद्यन्यतमकालस्य सहकारित्वात् ।

न बलाद्विभागे तदापत्तिरतोविभागात्पूर्व्वमस्मदीयमिति प्रयोगोगौणएवेत्यतआह। एकपुत्रेति। तथाच व्यभिचारात् विभागस्य सामान्यतः कारणत्वबाधेन तत्र कुत्र कारणादेव सम्बन्धिनिधनात् बहुपुत्रस्थलेपि तदभावे तदन्यथासिद्धेश्च सर्व्वत्र सम्बन्धिनिधनमेव स्वत्वहेतुरित्युत्पन्नस्वत्वघटितविभागलक्षणस्य नानुपपत्तिर्नवा पूर्व्वमस्मदीयमिति प्रयोगोगौणः किन्तु मुख्यएवेति। पितुर्धनमिति तु भूतपूर्व्वत्वात् उपपाद्यमिति भावः। अर्जयितृव्यापारइति। इदञ्च नार्जनार्जयित्रोर्लक्षणपरं। अन्योन्याश्रयप्रसङ्गात्। किन्त्वर्जनस्वामित्वयोः सामानाधिकरण्येन कार्य्यकारणभावपरम्। अर्जनलक्षणन्तु स्वामित्वहेतुभूतव्यापारत्वमेव तथाच व्यधिकरणस्य पितृनिधानादेर्नपुत्रस्वत्वोत्पत्तौ हेतुत्वमिति भावार्थः तेन व्यधिकरणस्य हेतुत्वासम्भवेन। जन्मैवेति। नच पुत्रोत्पत्त्यनन्तरं पित्रर्जितद्रव्ये पुत्रस्वत्वानुपपत्तिराद्यलक्षणसम्बन्धरूपपुत्रजन्मनोऽतीतत्वादिति वाच्यम्। जन्मपदेनाद्यक्षणसम्बन्धध्वंसस्यैव लक्षणयोक्तत्वात्। ननु स्वत्वं यथेष्टविनियोज्यत्वेन शास्त्रगम्यन्त्वलक्षणन्तच पितुर्भावि द्रव्ये पुत्रस्यात्वतं पितुर्द्रव्यं पुत्रेण यथेष्टविनियोज्यमिति शास्त्रेण पितृद्रव्यत्वावच्छेदेनैव पुत्रविनियोज्यत्वस्य बोधनात् चूडामणिमतमादरणीयमिति चेन्न। तथासति जन्मप्रागपि स्वत्वापत्त्या जन्मैवार्जनमित्य

नुपपत्तेः । किञ्च स्वं विनियुञ्जीतेति श्रुतिवाक्यादन्वयबोधे सति यथेष्टविनियोज्यत्वेन शास्त्रगम्यत्वरूपस्वत्वज्ञाने स्वपदात्त दुपस्थितिः तस्माच्च सत्यान्तदन्वयबोध इत्यन्योन्याश्रयात् । तस्मात्स्वत्वम्पदार्थान्तरमेव स्वत्वज्ञाखण्डोपाधिविशेष इति । युक्तमिति । अर्जनस्वामित्वयोः सामानाधिकरण्यानुरोधादिति भावः । जीवत्येवेति । पातित्यादिकं विनेति शेषः । जन्मैवेति । अर्जनमिति शेषः । दूषयति । नैतदिति ॥ ० ॥

यथा मनुः । ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् । भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥ जीवतोरपि पुत्राणां कुलीन विभागइत्याशङ्कायामिदमुक्तम् । तदानीमस्वामित्वादिति । नच भार्या पुत्रश्चेत्यादिवदस्वातन्त्र्याभिप्रायमिति वाच्यम् । तदानीं स्वत्वे प्रमाणाभावात् । भार्यादिषु तु । यत्ते समधिगच्छन्ति अर्ज्जयन्तीति स्वत्वे सिद्धे युक्तमस्वातन्त्र्यवर्णनम् । किञ्च । श्रोपातेपि तेषामस्वामित्वे स्वधनसाध्यवैदिककर्म्मोच्छेदाच्छ्रुतिविरोधः स्यात् । देवलश्च । पितृधने ऽस्वाम्यमेव स्पष्टयति यथा । पितर्य्युपरते पुत्रा विभजेयुर्धनं पितुः । अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते ॥ ० ॥

ऊर्द्ध्वं मृतोपरमानन्तरम्। भार्य्यापुत्रश्च दासश्च त्रयएवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनमित्यन्वयः। अधना इत्यस्यास्वतन्त्रा इत्यर्थः। तथाऽनीशा इत्यत्रापि अस्वतन्त्रा इत्यर्थोवाच्य इत्याशङ्क्यते। नचेति। तदानीं पितृजीवनकाले। भार्य्यादिष्विति। अर्जयन्तीत्यनेन स्वत्वहेतुरूपार्जनबोधनात्स्वत्वप्राप्तौ तदन्यथाऽनुपपत्त्या युक्तमस्वातन्त्र्यवर्णनमित्यर्थः। नन्वधिगमोनोपार्जनं किन्तूपादानमेव वाच्यमत आह। किञ्चेति। नच पत्यादिभिर्दत्तैः कर्म्मोपपत्तिरिति वाच्यं तर्हि पत्यादिकृतत्यागएव भार्य्यादीनां स्वत्वमुत्पादयेत्। तथाचान्यतोलब्धे यथालाभानन्तरमेव पत्यादेः स्वत्वं तथा पत्यादितोलब्धेऽपि स्यादिति कथं तेन कर्म्मोपपत्तिरिति तद्दोषतादवस्थ्यात्। ननु अनीशा इत्यस्यास्वतन्त्रा इत्येवार्थः अस्वाम्यार्थकत्वे जीवतोरिति द्विवचनबललभ्यस्य पितरि जीवति मातरि जीवन्त्यां अनीशा इत्यस्य पितृपरमानन्तरं मातृस्वत्वविषये बाधापत्तेस्तदानीं पुत्राणां स्वामित्वे सर्वेषामविवादादत आह। देवलस्येति तथाचात्र मातुरश्रुतत्वात् अस्वाम्यपदं मुख्यमेव नत्वस्वातन्त्र्ये लाक्षणिकमिति भावः। नन्वत्र नञर्थोऽप्राशस्त्यमेव अप्राशस्त्यं विरोधश्चेत्यादिना तस्यापि नञर्थतयोक्तेः स्वाम्यस्याप्राशस्त्यञ्च पितुरनुमतिनैरपेक्ष्येण विनियोगाप्रयोजकत्वम्। अभावार्थकत्वे भवत्यर्थोत्पत्त्यन्वयानुपपत्तेरत आह ॥०॥

किञ्च । जीवत्यपि पितरि पितृधने पुत्राणां स्वामित्वे पितुरनिच्छयापि विभागः स्याज्जन्मनैव स्वत्वमित्यत्र प्रमाणाभावाच्च । अर्जनरूपतया जन्मनः स्मृतावनधिगमात् क्वचिज्जन्मनैवेति च जन्म निबन्धनत्वात् पितापुत्रसम्बन्धस्य पितृमरणस्य च स्वत्वकारणत्वात् परम्परया वर्णनम् । अन्यथा पारेणान्यस्य स्वत्वमविरुद्धं । शास्त्रमूलत्वादस्य । दृष्टं च लोकेपि दाने हि चेतनोद्देशविशिष्टत्यागादेव दातृव्यापारात्सम्प्रदानस्य द्रव्ये स्वामित्वं ॥ ० ॥

किञ्चेति । ननु पितुरनुमत्या दायभागः जीवति पितरि स कथं दायभागोऽनुमतिरित्यादिवचनात् । विभागेऽप्यस्वातन्त्र्यमविशिष्टमतआह । जन्मनैवेति । तथाचानुपपत्त्यभावात् अस्वाम्यमित्यत्र नलक्षणा भवति आप्तसमार्थकोलाक्षणिक इति भावः । स्मृतिरेव प्रमाणमिति निराकरोति । अर्जनरूपतयेति । ततश्च उत्पत्त्यैवार्थं स्वामित्वं लभते इत्याचार्य्यामन्यन्ते इति मिताक्षराधृतवचनं अमूलं समूलत्वे वा यस्मिन् गर्भस्थे पित्रादिर्मृतः तत्परमन्यथा पुत्रवतः पितुः स्वधनेऽप्यस्वातन्त्र्यापत्तेरित्याशयः । वस्तुतस्तूत्पत्त्यैवेति तृतीया प्रयोजकतायां नतु जनकतायां तथाचोत्पत्तिसम्बन्धस्य सम्बन्धान्तरा

दधिकतया तत्प्रयुक्तो जनकधने तत्स्वत्वापगमानन्तरम्पुत्रोऽधिकारीत्यत्र तात्पर्य्यमिति बोध्यम्। कश्चिदिति ग्रन्थान्तरे जन्मैवेति लौकिकप्रामाणिकवाक्यमित्यर्थः। जन्मनिबन्धनेति। तत्पितृमरणस्य कारणत्वे तज्जन्मनोऽपि तत्र प्रयोजकत्वादित्यर्थः। ननु फलाधिकरणप्रत्यासन्नस्यैव फलजनकता तत्र च साक्षात्प्रत्यासत्तिसम्भवे परम्पराप्रत्यासत्तिर्नाश्रीयते गौरवात् तथाच पितृमरणादेर्व्यधिकरणतया जनकत्वाभावात्। साक्षात्प्रत्यासत्तिशालिनो जन्मनएव कारणत्वं स्यादतआह। अन्यव्यापारेति। शास्त्रमूलेति तथाच शास्त्रबलेनैव व्यधिकरणस्यापि परम्परया कारणत्वमिति भावः। ननु शास्त्रमनीशास्त्रीत्यादिकन्त्वास्वातन्त्र्यपरमित्युक्तमेवेत्यतआह। दृष्टश्चेति। त्यागमात्रात् दर्पोत्सर्गादिरूपात्स्वामित्वाजननादाह। चेतनोद्देशेति उद्देशः स्वामित्वे न विषयता साच त्यागात्मिकाया इच्छायाएवेत्यतआह। विशिष्टत्यागादिति॥ ननु त्यागात्केवलं स्वत्वनाशः सम्प्रदानस्वत्वन्तु ममेदमिति भाविस्वत्वावगाहितत्स्वीकारादेवेति मतं निराकरोति॥०॥

नच स्वीकरणात्स्वत्वं स्वीकर्त्तरेव दातृत्वापत्तेः परस्वत्वापत्तिफलेन हि दानरूपता तच्च फलं सम्प्रदानाधीनम्। यथा देवतोद्देशेन द्रव्यत्यागं कुर्व्व

न्नपि यजमानेन होता । किन्तु । तस्यैव त्यागस्य होमाभिधाननिमित्तं प्रक्षेपं कुर्व्वन् ऋत्विगेव होतेत्युच्यते तद्वदत्रापि स्यात् । किञ्च । मनसा पात्रमुद्दिश्येत्यादिशास्त्रे स्वीकारात्प्रागेव दानपदन्दृष्टम् । ननु ग्रहणं स्वीकारः । अभूततद्भावे च्विप्रयोगात् । अस्वं स्वं कुर्व्वन् व्यापारः स्वीकारो भवति । कथन्तत्प्रागेव स्वत्वम् । उच्यते । उत्पन्नमपि स्वत्वं सम्प्रदानव्यापारेण ममेदमिति ज्ञानेन यथेष्टव्यवहारार्हं क्रियत इति स्वीकारशब्दार्थः ॥ ८ ॥

नचेति । स्वीकर्त्तुरेवेत्येवकारेण त्यक्तुर्व्यवच्छेदः इदमुपपादयति । परस्वत्वापत्तिफलेनहीति । अयमाशयः । धात्वर्थतावच्छेदकफलानुकूलव्यापारवतएव तज्जन्तद्धातुव्यपदेश्यत्वं । यथा धात्वर्थतावच्छेदकउत्तरदेशसंयोगानुकूलव्यापारवति चैत्रे गन्तेति व्यवहारः स्वीकारस्य स्वत्वहेतुत्वे धात्वर्थतावच्छेदकपरस्वत्वानुकूलस्वीकाररूपव्यापारवतः स्वीकर्त्तुरेव दातृपदव्यपदेश्यत्वापत्तिरिति पूर्व्वस्वत्वध्वंसरूपफलस्य न तद्व्यपदेशनियामकता तथात्वे उपेक्षितादावपि दातृपदव्यपदेशापत्तिरिति । केचित्तु स्वीकारस्य स्वत्वहेतुत्वे परस्वत्वफलोपहितत्यागात्मकदाने सर्व्वांशे एकस्यापि कर्तृत्वासम्भ

वात्। एकांशमादायैव दातृत्वव्यवहारे कर्त्तव्ये प्रधानीभूत फलांशानुकूलव्यापारवत्येव दातृव्यवहारः स्यादिति व्याचक्रुः दृष्टान्तेनेदं द्रढयति। यथा होति। होमाभिधाननिमित्तमिति विशिष्टदेशावच्छिन्नप्रक्षेपोपहितत्यागस्य होमत्वात्। प्रक्षेपस्य तदभिधाननिमित्तत्वमित्यर्थः तेन जुधात्वर्थतावच्छेदक प्रक्षेपानुकूलव्यापारवति ऋत्विजि होता इत्यादिव्यपदेशो यथा तथेत्यर्थः। त्यागस्य स्वत्वहेतुत्वे स्फुटमेवशास्त्रम्प्रमाणयति। किञ्चेति। आदिना भूमौ तोयं विनिःक्षिपेदित्युत्तरप्रतीकपरिग्रहः। शास्त्रेशास्त्रबोधितत्यागे। दानपदं दृष्टमिति। विद्यतेमागरस्यान्तोदानस्यान्तोनविद्यते इतितद्वचनस्योत्तरार्द्धे दानपदमप्रयुक्तमित्यर्थः तथा च निरन्तरयोरेव स्वस्वत्वध्वंस परस्वत्वोत्पत्तिफलयोर्ददातिधात्वर्थतावच्छेदकत्वात् दानस्य परस्वत्वहेतुता शास्त्रसिद्धैवेतिभावः। स्वीकारात्प्रागेव स्वत्वे ग्रहणस्य स्वीकारपदार्थत्वासम्भवमाशङ्कते। नन्विति। स्वीकार शब्दार्थइति। तथा च स्वपदस्य यथेष्टविनियोगार्हत्वविशिष्टे लक्षणेति भावः। ननु याजनाध्यापनप्रतिग्रहैर्ब्राह्मणोधन मर्जयेदित्यत्र राजसूयेन यजेत इत्यादिवत्। याजनाध्यापनेन धनमर्जयेदित्यन्वयात् प्रतिग्रहस्यार्जनरूपता सिद्धा। प्रतिग्रहस्य स्वत्वाहेतुत्वे तद्विरुद्धं स्वत्वहेतुव्यापारस्यैवार्जनत्वादतआह ॥०॥

याजनाध्यापनसाहचर्य्याच्च प्रतिग्रहस्य स्वत्व मजनयतोपि अर्जनरूपता न विरुद्धा याजनादौ दक्षिणादानादेव स्वत्वात्पितृनिधनकालीनं वा जीवनमेव पुत्रस्यार्जनं भविष्यति ॥ ० ॥

याजनेति। अर्जनरूपताऽर्जनव्यपदेशः अविरोधमुपपादयति। याजनादाविति। तथाच याजनादीनां स्वत्वहेतुत्वेन तदन्त्यानुरोधवत्। अर्जयेदित्यत्रार्ज्जनत्वं। किन्तु स्वत्वप्रयोजकत्वमेव तत्र प्रतिग्रहेऽप्यत्रतन्दत्ते सत्ययमतिगृह्णातीत्यवधारण एव तदुद्देशेन दत्तेत्यागात् तत्स्वत्वोदयात्प्रतिग्रहवैमुख्यश्रवणे तद्व्यतिरेकाद्धेति भावः। ननु धात्वर्थगमनानुकूलकृतिमत्येन गन्त्रादिव्यपदेशोलाघवात्। ननु धात्वर्थतावच्छेदकफलानुकूलव्यापारवति गौरवात्। तथाच कथं प्रतिग्रहीतुर्दातृत्वापत्तिस्तस्यदानानुकूलकृत्यभावात्। अतएव ऋत्विगेव होतेत्युच्यते तस्यैव हवनानुकूलकृतिमत्त्वात् न यजमानस्य भवन्मते स्वीकारे स्वपदस्य यथेष्टविनियोगार्हत्वविशिष्टे लक्षणा वच्च मन्मतेपि शास्त्रीयदानपदस्य स्वत्वाभिसन्धानपूर्वकत्यागे लक्षणा। किञ्च याजनाध्यापनयोः पूर्ववर्त्तितया प्रयोजकत्वात् तत्समभिव्याहृतप्रतिग्रहस्यापि तथात्वं युक्तं ननु प्रयोजकज्ञानविषयतया। अपिच त्यागमरणाद्योः स्वत्वहेतुत्वे

तदानीं सुतादीनामर्जयितृप्रतीतिव्यवहारापत्तिरतः समाना धिकरणव्यापारएव स्वत्वहेतुर्लाघवात् तत्कथं पितृनिधनादेः पुत्रस्वत्वहेतुत्वमतआह । पितृनिधनकालीनत्वेति । पुत्रजी वनमेव स्वत्वहेतुस्तच्च पितृनिधनकालः सहकारीत्यर्थः एवं सत्यस्वाम्यं ह्रीत्यादिकमपि सगच्छते जन्मनोहेतुत्वे तत्र तच्च णस्यादिति भावः। विनिगमकान्तरमाह ॥ ० ॥

किञ्च। भ्रात्रादिधने तन्मरणात्तन्मरणकालीन जीवनाद्वा भ्रात्रन्तरादेः स्वत्वमकामेनापि वाच्यम्। अतऊर्द्ध पितुश्चेत्यादि तत्कालीनस्वत्वज्ञापनार्थन्त दानीमेव चेच्छाप्राप्तं विभागमनुवदति प्राप्तत्वाद्वि धानानुपपत्तेः। नच नियमः सम्भवति॥

एवं सहवसेयुर्वा पृथग्वा धर्मकाम्ययेति मनु विरोधात्। दृष्टार्थत्वाच्च विभागस्य न तन्नियमः कालनियमोवा सम्भवति ॥ ० ॥

किञ्चेति। मरणस्य हेतुत्वे पूर्वोक्तदोषापत्तिरतस्तन्मरण कालीनजीवनाद्वेति। अकामेनापीति । अन्यथा मातृपर्य्यन्त रहितभ्रातृधने तस्मिन्निर्द्दोषे जीवत्यपि भ्रात्रन्तरस्याद्यक्षण सम्बन्धध्वंसरूपजन्मतः स्वत्वापत्तेस्तदनिच्छयाऽपि विभाग

प्रसंगात्। भ्रातृस्वत्वस्य च भ्रात्रन्तरस्वत्वाविरोधात्सामुदायिकत्वे तथादर्शनात्। एवं भ्रातुर्दारपरिग्रहे तदनन्तरं भ्रातुःस्वत्वनाशस्तद्धने तद्दारमरणे पुनः स्वत्वोत्पत्तिरिति कल्पना गौरवाच्च। अतोऽत्र क्लृप्तकारणादेव जीवनादन्यथापि निर्वाहे किम्पुत्रस्वत्वम्प्रति तज्जन्मनो हेतुत्वकल्पनयेति भावः। अत्र मनोःस्वरसन्दर्शयति। अतइति। यतो न जीवति स्वत्वमतइत्यर्थः तत्कालीनं पितृमरणकालीनं यथोक्तन्यायात्। उपरमएव स्वत्वन्तदिच्छयाविभागोऽपि तदाप्राप्तएवेति। विभागाविध्यनुपपत्तेराह। तत्कालीनेति। पितुरुपरमकालमित्यर्थः। अनुवदतीति। तथाच तात्कालिकस्वत्वज्ञापनार्थं विभागानुवादइति नतद्विधिरिति भावः। विधित्वे सम्भवत्यनुवादत्वमन्याय्यमतोनियमविधिरेव भविष्यतीत्याशङ्क्य निषेधयति। नचेति नियमः पितुरूर्द्धं विभजेदित्येवं रूपः। दृष्टार्थत्वाददृष्टाजनकत्वादिति यावत्। तथा चादृष्टजनककर्मण्येव करणाकरणयोः शुभाशुभादृष्टमाचार्यो नियमः यथा जलाशयोत्सर्गादौ गौरवतारणानुमन्त्रणयोर्यजमानकर्तृकमन्त्रपाठनियमः करणे शुभादृष्टार्थपाशवर्गभरणादिनियमस्य अकरणादशुभादृष्टार्थमिति करणाकरणाभ्यान्तज्जनकत्वयं विभागोवचनशतेनापि निर्णेतुमशक्यइतिभावः। कालनियमोयदि विभजेत्तदा पितुरूर्द्धमेव विभजेदित्येवं रूपः। अथास्वदृष्टार्थएव कालनियमइत्यतआह॥०॥

किञ्च। पितर्य्युपरत इत्यनन्तरकाल एव विभागः स्यात्। नतु परस्तादपि। जातेष्टिवज्जातप्राणवियोगापत्तिसमानस्यात्र विरोधस्याभावात् पितुरुपरमानन्तरस्य च यावज्जीवपर्यन्तस्य स्वेच्छातएव प्राप्तत्वात्। अतोजीवति पितरि सत्यपि पुत्राणां स्वाम्ये विभागनिषेधार्थं मनुवचनं वाच्यम्। तच्चान्याय्यम्। अस्वार्थपरत्वापत्तेः ॥ ० ॥

किञ्चेत। पितुरुपरमानन्तरमित्यत्रानन्तरमव्यवहितानन्तरमात्रं वा आद्येऽनन्तरकाल एवेति। पितुरुपरमाव्यवहितानन्तरकाल एवेत्यर्थः। विशेषणस्येतरव्यावृत्तिफलत्वादाह। नत्विति। ननु यथा वैश्वानरं द्वादशकपालं निर्वपेत्। पुत्रे जाते इत्यत्र जातेष्ट्यव्यवहितोत्तरकालस्य प्राप्तावपि बाधकबलादशौचान्ते क्रियते तथात्रापि समयान्तरे विभागोभविष्यतीत्यत आह। जातेष्टीति जातप्राणेति। तथाच नाडीच्छेदानन्तरमशौचोत्पादात्। जातकर्म्मवदच्छिन्ननाडीदशायामेव इष्टिर्व्वात्या स्तन्यपानस्य छन्नाभिरिति ब्रूयात् स्तनन्तु प्रतिधत्ते इति गोभिलेन नाडीच्छेदात्परमभिहितं तावत्कालञ्च स्तन्यापानेशुष्ककण्ठतया बालवियोगापत्तिरिति तद्विरोधात् नच तथा इह तु न तद्विरोध इत्यर्थः। द्वितीये।

पितुरुपरमानन्तर्य्यस्येति। स्वेच्छात एवेति। तथाच पितुपरमात्पूर्व्वं पुत्राणामस्वाम्यात् विभागाप्रसक्तेर्विभागे तदनन्तरकालस्यावश्यकतया विधिं विनापि सिद्धत्वे नाव्यावर्त्तकतया तथा नियमोऽप्यव्यर्थ एवेति भावः अदृष्टार्थकत्वकल्पना चादृष्टादिकल्पनागौरवपराहतैवेति हृदयम्। ननु तथापि परिसङ्ख्याविधिरास्तां जीवति पितरि पुत्रान् विभजेरन्निति नानुवाद इत्याशङ्क्य निराकरोति। अतइति। भवन्मते स्वत्वस्य प्रागेव जातत्वात्। अन्यथा प्रसक्त्यभावे निषेधानुपपत्तेरिति भावः वाच्यम्भवतेति शेषः। अस्वार्थेति। ऊर्द्धम्भजेरन्नित्यस्य जीवति न भजेरन्नित्यस्वार्थपरत्वापत्तेरित्यर्थः। इदमुपलक्षणम्। स्वार्थहानिरपि बोध्याप्राप्तबाधस्तु नास्ति जीवति पितरि विभागस्य प्राप्तेरिति बोध्यम्। एतेन स्वार्थहानिप्राप्तबाधावपि बोध्याविति चूडामण्युक्तमयुक्तं। सप्रयोजनतयाऽनुवादोऽन दोषायेति स्वमतमुपसंहरति॥०॥

अतोजीवतोः पित्रोर्द्धने पुत्राणां स्वाम्यं नास्ति। किन्तूपरतयोस्तयोरिति ज्ञापनार्थं मन्वादिवचनम् एकः शब्दोऽपरस्यार्थः। न चोपरममात्रमेव विवक्षितम् किन्तु। पतितप्रव्रजितत्वाद्युपलक्षयति। स्वत्वविनाशहेतुतासाम्यात्।

तदाह नारदः । मातुर्निवृत्ते रजसि दत्तासु भगिनीषु च । विनष्टे वाप्यशरणे पितर्य्युपरतस्पृहे । विनष्टे पतिते अशरणइति गृहस्थाश्रमरहिते ॥०॥

अतइति । एकोजीवति स्वाम्याभावः शब्दः अनीशाइति शब्दसाधितः अपरउपरमे स्वाम्यस्योऽर्थो विभागेऽन्वयः उपरमपदस्य यथाश्रुतार्थपरत्वे पतितादौ जीवति पितरि तद्धनविभागाभावप्रसंगइत्यतआह । नचेति । नहीत्यर्थः आदिना वानप्रस्थत्वोपरतस्पृहत्वपरिग्रहः लक्ष्यतावच्छेदकमाह । स्वत्वविनाशेति । तथाच स्वत्वप्रतिसन्धानापूर्व्वकस्वत्वापगमहेतुव्यापारत्वेन लक्षणेत्यर्थः । तेन पितृदत्तादौ न विभागप्रसंगः दानादेः स्वत्वप्रतिसन्धानपूर्वकत्वादिति । पातित्यादेः स्वत्वनाशकत्वे प्रमाणमाह । तदाहेति । अत्र पुत्राविभजेयुरित्युपक्रमलब्धत्वेन विभागानुवादात्पितृस्वत्वापगमपुत्रस्वत्वयोरवगमादिति भावः । निर्दोषे पितरि स्थिते इति देवलवचनेन सदोषे पितरि तत्स्वाम्यनाशपुत्रस्वाम्यावगमात्तदेकवाक्यत्वाच्च विनष्टे पतिते इति विनाशार्थकत्वे पितर्य्युर्द्ध्वगते पुत्राइति नारदवचनान्तरेण सह पौनरुक्त्यापत्तेरितिभावः । अतः पतितस्यापि सर्वस्वदानादिप्रायश्चित्तश्रवणात् । प्रायश्चित्तपराङ्मुखेति विशेषणन्दयन्तेन प्रायश्चित्त

प्रागभावाभावसहकृतस्यानित्यं स्वत्वनाशहेतुरिति बोध्यम्। गृहस्थाश्रमरहित इति। गृहस्थाश्रमो गार्हस्थ्यं तस्माद्रहिते आश्रमान्तरगते इत्यर्थः गृहस्थाश्रमाश्रय इति पाठेऽपि शरणं गृहरक्षित्रोरित्यमरकोषात्। तद्रहितरीति सएवार्थः उपरतस्पृहे स्वत्वसमानाधिकरणेच्छाप्रागभावासमानकालीनेच्छाध्वंसवति॥ ०॥

यदा निवृत्ते वापि मरणादितिपाठः। तदा मरणान्निवृत्ते जीवति निस्पृह इति पाठान्तरमनाकरम्। अत्राप्युपरतस्पृहत्वादिना पुत्राणां स्वत्वं पितृधने भवतीति ज्ञापनादयमेकः कालोविभागस्येच्छाप्राप्तोऽनूद्यते। प्राप्त्यनुसारित्वाच्चानुवादस्य स्वामित्वाच्च प्राप्तः एकस्यापि स्वधने साम्यादेकेच्छयापि विभागप्राप्तेः समेत्येति सहितत्वमप्राप्तमनूद्यते अन्यथा साहित्यवत् बहुत्वस्याप्यवगतेर्द्वयोर्विभागोनस्यादेव द्वयोर्विभागप्रतिपादकशास्त्राभावात्। ननूपरते पितरि ज्येष्ठ एव धनाधिकारी नेतरः।

यथा मनुः। ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः। शेषास्तमुपजीवेयुर्यथैव पितरं तथा।

ज्येष्ठोऽत्र पुन्नामनरकव्यावर्त्तकोऽभिप्रेतो नतु जीवद्पेक्षः ॥ ० ॥

यदेति । विनष्टे वापीति तृतीयचरणे निवृत्ते वापीति यदापाठ इत्यर्थः । तदाऽस्यनिस्पृहत्वविशेषणत्वमाह । तदेति । यदा तदेत्यस्वरसस्रूचनाय तद्दीजस्य विशेषणवैयर्थ्यमेवेतिपाठान्तरमिति निवृत्ते वापि रमणादिति प्रकाशादिधृतपाठान्तरमनाकरमित्यर्थः बहुषु ग्रन्थेष्वदर्शनात् । तथाविधे पितरि विषयान्तरस्पृहावत्यपि प्रसंगाच्चेतिभावः । स्थापनादिति । स्थापनार्थेत्यर्थः समेत्येति मिलित्वेत्यर्थः मिलनस्य सर्व्वेषामुपनयत्वे एव तत्किमेकेच्छया न विभाग इत्यत आह । एकस्यापीति । स्वाम्यादिति । तथाच स्वामित्वेन स्वतन्त्र्यादेकेच्छया विभागो नैयायिक एवेति भावः । पत्नेति । कदाचित्सर्व्वेच्छया विभागः कदाचिदेकेच्छया यदा सर्व्वेच्छया तत्पक्षप्राप्त इत्यर्थः अनास्थयेति शेषः अन्यथा न्यायप्राप्तानुवादकतां विहाय वचनबलादेवतस्य विवक्षितत्वे । साहित्यवदिति । साहित्यं मिलनमात्रं नतु परस्परसापेक्षाणां तुल्यरूपाणां एकक्रियान्वयित्वरूपमात्रं साहित्यं विभागक्रियायावैशेषिकस्वत्वावधारणरूपाया अवपातादिरूपतदनुकूलव्यापाररूपायावा सर्व्वान्वयात् वचनान्तरात् द्वयोर्विभागो भविष्यतीत्याशङ्का

मपनयति । द्वयोरिति । किञ्चैवं एकस्य विदेशस्थत्वे वाल्या दिनाऽस्वामित्वे वा मिलनाभावात् विभागाभावे । अप्राप्तव्यव हाराणां धनं व्ययविवर्जितं। न्यसेयुर्बन्धुवर्गेषु प्रोषितानान्तथैव चेति वक्ष्यमाणवचनविरोधः स्यादिति। पितृवज्ज्येष्ठएव पितुर नन्तरन्धनाधिकारी तेन सह विभागएवेतरेषां नास्तीत्या शङ्कते। नत्विति ॥ ० ॥

यथामनुः । ज्येष्ठेन जातमात्रेण पुत्त्रीभवति मानवः । पितृणामनृणश्चैव स तस्मात्सर्व्वमर्हति यस्मिनृणं सन्नयति येन चानन्त्यमश्नुते । स एव धर्म्मजः पुत्रः कामजानितरान्विदुः । नैतत्सर्वे च्छाधीनज्येष्ठाधिकारश्रुतेः ।

यथा नारदः । विभृयादिच्छतः सर्व्वान् ज्येष्ठो भ्राता यथा पिता । भ्राता शक्तः कनिष्ठोवा शक्त्य पेक्षा कुले स्थितिः । सर्वेच्छया कनिष्ठोपि शक्तः सन्विभृयादिति । ज्येष्ठता चातन्त्रम् ।

यथा मनुः । एवं सह वसेयुर्वा पृथग्वा धर्म्म काम्यया । पृथग्विवर्द्धते धर्म्मस्तस्माद्धर्म्या पृथक् क्रिया। सह पृथग्वेति पदाभ्याङ्काम्ययेति चेच्छावि कल्पकत्वन्दर्शयति ॥ ० ॥

पुत्रीभवतीति। पुन्नामनरकत्राणकर्त्तृपुत्रवान्भवतीत्यर्थः। अतस्मादिति। तथा च ज्येष्ठस्य धनलाभे पुन्नामनरकत्राण कर्त्तृत्वरूपपुत्रत्वस्य हेतुत्वेनोपादानात्। तद्रूपज्येष्ठस्यैव धनाधिकारः। तद्रूपस्य जीवदपेक्षज्येष्ठस्येति भावः। एतच्च सजातीयस्त्रीजातेषु विजातीयस्त्रीजातेषूत्कृष्टाजातस्यैव ज्येष्ठत्वम्। सदृशस्त्रीपुजातानामपुत्राणामविशेषतः। न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते इति मनुवचनात् धर्मजःनतुरागजः। अपुत्रास्मत्त्वमदृशइति निन्दार्थवादादितिभावः।अदृष्टोऽदर्शन शीलाराघमादृति मिश्राः तथा च विभागवचनं मृतज्येष्ठकनिष्ठ भ्रातृगणविषयमितिपूर्व्वपक्षयितुरभिप्रायः। ज्येष्ठता स्यात स्वमिति ज्येष्ठएवेत्यवधारणं ज्येष्ठस्य सति भरणसामर्थ्ये ज्ञेयं। पृथक्विवर्द्धते इति। यद्यप्यविभक्तानामप्येकेनैव कर्म्मणा सर्व्वेषान्धर्म्मोदयात्पृथगभावे धर्म्मवृद्धिरनुपपन्ना तथापि पार्थक्ये स्वस्वासाधारणद्रव्येण कृतकर्म्मणोऽतिशयितधर्म्मोत्पत्तेस्तथा त्वमिति ॥ ० ॥

तदेवं पितृस्वत्वापगमएकः कालोपरश्चान पगनएव। पितुःस्वाम्ये पितुरिच्छयेति कालद्वयं न पुनः पितर्य्युपरतइत्येकः कालः पितर्य्युपरतस्पृहे मातुश्च निवृत्ते रजसीत्यपरः। अनिवृत्तेपि मातृर

जसि पितरि सस्पृहे तदिच्छयेति कालत्रयमादर णीयम्। मातृरजोनिवृत्तेः पितुपरतस्पृहत्वविशेष णत्वे त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम्। त्र्यष्टवर्षोऽष्टवर्षां वा धर्मे सीदति सत्वरइति मनुना विवाहकालविधानात्। वनस्थस्त्वागतोव्रजेदित्या श्रमान्तरगमनकालविधानात्। तदा च रजोनिवृत्ते र्मातुरसम्भवे पितरि चोपरतस्पृहे वानप्रस्थे तत्पुत्रा णामिच्छतामप्यविभागप्रसङ्गात्। निर्विशेषणमुप रतस्पृहत्वमेव पितृधनविभागकालइतिचेन्न अनु परतस्पृहे पितरि पतितेऽप्यविभागप्रसङ्गात् ॥०॥

अनपगतएवेति। यद्यपि पितुरिच्छया विभागेऽप्युपेक्षया पितुः स्वत्वनाशोऽप्यवश्याभ्युपेयः अन्यथा स्वत्वविभागस्यैवा नुपपत्तेः। तथापि विभागेच्छातदधीनस्वत्वावगमाभ्यां काल द्वयमुक्तम्। वस्तुतो लाघवादितरस्वत्वाभिसन्धानापूर्व्वकपितृ स्वत्वापगमकालएकएव दायस्य विभागे निमित्तं नतु काल द्वयं गौरवादिति बोध्यं। चूडामणिसम्मतोप्ययं पन्थाइति यत्तु पुत्राणां सम्भाव्यमानानुभाविकलहनिराकरणार्थम्पिता तत्तदंशानवधार्य्य पुनस्तेषु स्वयमधिकरोति न तत्र विभागः पितुरुपेक्षाविरहेण तत्स्वत्वस्यैव विद्यमानत्वात्। तेन तत्र

विभागप्रयोगोभाक्त एवेति मिताक्षराकृन्मतन्निरस्यति । नपुनरिति । वदेदुद्देत्यत्वर इत्यनेन उक्तादल्पकालपरिगृहीतादरः । तदा चेति । द्वात्रिंशच्चतुस्त्रिंशद्वर्षमध्य इत्यर्थः त्रिंशद्वर्षेणोद्वाहितायाद्वादशवर्षीयायाः स्त्रियाः पत्युःपञ्चाशद्वर्षसमये द्वात्रिंशद्वर्षवयस्कत्वात् । एवं चतुर्विंशतिवर्षेणोढायाः स्त्रियाश्चाष्टवर्षीयायाः पत्युःपञ्चाशद्वर्षे चतुस्त्रिंशद्वर्षीयत्वात् । अविभागप्रसंगादिति । इदन्तु न सम्यक् इदानीमविभागस्येष्टत्वात् । अन्यथा पुत्रेषु दारान्निःक्षिप्य वनं गच्छेत् सहैव वा इति रागनिवृत्त्यनिवृत्तिभ्यां प्रकारद्वयविधानेन रागानिवृत्तौ सह वनगमनपक्षे वानप्रस्थाश्रमोत्पन्नपुत्राणां वृत्तिलोपापत्तेः । गृहस्थस्तु यदा पश्येद्वलीपलितमात्मनः । अपत्यपुत्रतत्पुत्रास्तदारण्यं समाविशेत् । इत्युक्तकालान्तरे चारण्यगमने विभागस्य नानुपपत्तेः इदानीं मातृरजोनिवृत्तेरपि सत्वादिति बोध्यं । केचित्तु अविभागप्रसंगादिति । नचेष्टापत्तिः व्यवहारविरोधात् । वानप्रस्थस्य पत्नीसहित वनगमनपक्षेऽप्यूर्द्ध्वरेतस्त्वात् । अपत्यसंभावनानिवृत्तेः स्वतः सिद्धत्वेन तत्परत्वासम्भवाददृष्टार्थकल्पनागौरवाच्चेत्याहुः । तदसत् । नहि वनगमनमेव पुरुषस्य ऊर्द्ध्वरेतस्त्वं जनयति येन तदनन्तरमपत्यसम्भावनानिवृत्तिः स्यादिति । निवृत्ते रजसोत्यस्य तु विषयः स्वयमेव परतो वक्ष्यते ॥ ० ॥

अयमप्यपरः कालइत्यभिधाने कालचतुष्टया पत्तिः पितुरुपरमः पतितत्वं निस्पृहत्वमिच्छा चेति। यच्च कार्याक्षमे पितरि पुत्राणां विभागे स्वातन्त्र्य मुक्तन्तद्वचनानभिज्ञत्वेन ।

तथा च हारीतः। जीवति पितरि पुत्राणामर्था दानविसर्गाक्षेपेषु न स्वातन्त्र्यम् । कामन्दीने प्रोषिते आर्त्तिङ्गते वा ज्येष्ठोर्थांश्चिन्तयेत् । सुव्यक्त माहतुः शङ्खलिखितौ। पितर्य्यशक्ते व्यवहारान् ज्येष्ठः प्रतिकुर्यात् । अनन्तरो वा कार्य्यज्ञस्तदनु मतोनत्वकामे पितरि रिक्थविभागोवृद्धे विप रीतचेतसि दीर्घरोगिणि वा ज्येष्ठएव पितृवद र्थान् पालयेदितरेषाम्॥०॥

कालचतुष्टयन्दर्शयति । पितुरुपरमइत्यादिना कार्य्या क्षमइति। अतिवृद्धत्वादिनेति शेषः आदानं ग्रहणं विसर्ग स्त्यागः आक्षेपोन्यासकरणं न स्वातन्त्र्यं न तदनुमतिं विनाऽधि कारः दीनेऽतिवृद्धत्वादिना दुःखिते आर्त्तिं गतेऽत्यन्तशोक रोगादिभिः पीडिते। एतद्वचने स्वयंवक्ष्यमाणःकार्य्याक्षमादौ पितरि भागनिषेधेन ज्येष्ठस्य गृहयोगक्षेमावरणरूपोऽर्थोऽन भ्यक्तः नस्वातन्त्र्यमित्यस्य पितुः स्वास्थ्यदशायामेव सम्भवात्।

चिन्तयेदित्यस्य च विभागार्थं चिन्तयेदित्यर्थसम्भवादतआह। मुख्यकमिति वृद्धे सर्व्वकर्माक्षमे उन्मादे विपरीतचेतसि दीर्घ रोगिणि चिरतरकालं महारोगिणि। पितृवदिति पिता यथा सर्व्वेषां पालनपुरःसरमर्थाननुपालयेत्। तथेतरेषां कनिष्ठानाम्पालनपुरःसरमर्थान् पालयेदित्यर्थः तेन तथा भूते पितरि ज्येष्ठस्य कनिष्ठपालनपुरःसरमर्थपालकता प्रतिपादिता। अर्थपालने हेतुमाह॥०॥

ऋक्थमूलं हि कुटुम्बमस्वतन्त्राः पितृमन्तो मातुरप्येवमवस्थितायाः। एतद्वचनद्वयं कार्य्याक्षमे दीर्घरोगिणि च पितरि विभागं निषिध्य ज्येष्ठएव गृहञ्चिन्तयेत्। तदनुजीवा कार्य्यज्ञइत्याह। अतो नत्वकामे पितरीत्येतदेव कार्य्याक्षमे पितरि रिक्थ विभागइतिभ्रान्तलिखितम्। तस्मात्पतितत्वनिस्पृह त्वोपरमैः स्वत्वापगमइत्येकः कालोऽपरश्च सति स्वत्वे तदिच्छातइति कालद्वयमेव युक्तम्। मातुर्नि वृत्ते रजसीतितु पितामहधनाभिप्रायम्। निवृत्ते रजसि पुत्रान्तरसम्भावनाभावात्। तदानीमपि पितुरिच्छयैव पुत्राणां विभागः। अनिवृत्ते रजसि

क्रमागतधनविभागे पश्चाज्जातानां वृत्तिलोपापत्तेः। नचासौ युक्तः।

ये जातायेप्यजातावा येच गर्भे व्यवस्थिताः। वृत्तिन्तेऽपिहि काङ्क्षन्ति वृत्तिलोपोविगर्हितइतिमनुवचनात् यतएव पितृधने कालद्वयम् अतएव मनुगौतमादिभिर्म्मृतपदम्परित्यज्य ऊर्द्ध्वमित्युक्तम्। ऊर्द्ध्वम्पितुरिति पितुस्तदा स्वत्वापगमात्। तदर्थमेवोर्द्ध्वमित्युक्तम्। अतोयमेकोविभागकालः। ऊर्द्ध्वं विभागाज्जातस्त्वित्यनेन च सस्पृहे पितरि तदिच्छया विभागकालोऽपरोदर्शितः॥०॥

ऋक्थमूलं हीति। कुटुम्बं कुटुम्बभरणाङ्गीकृत्यअस्वतन्त्रा यथेष्टविनियोगानधिकारिणः अनेन पितृस्वत्वे पुत्राणामस्वातन्त्र्यं विभागादौ स्फुटमेवाभिहितमिति एवंमातरि जीवन्त्यामस्वतन्त्राः अतउक्तवचनानभिज्ञत्वात्। एतदेवेति। सुपां सुपेति सप्तम्यर्थे प्रथमा एतत्पाठस्थले एवेत्यर्थः कार्य्यास्वमे पितरि रिक्थविभागइति यल्लिखितं तद्भ्रान्तलिखितमित्यर्थः कार्य्यांचमत्वममयरूपविभागकालान्तरं निरस्य स्वोक्तदार्ढ्याय पुनरुपसंहरति। तस्मादिति। ननु तर्हि मातुर्निवृत्ते रजसीत्यस्य कोविषयइत्यतआह। मातुरिति। पुत्रान्तरसम्भावना

भावादिति । तेन मातृपदम्पितृपत्न्युपलक्षणं तदानीमपि पितृपत्नीरजोनिवृत्त्युत्तरकालेपि । पितुरिच्छयैवेति । अत्र प्रमाणं वक्ष्यते । ननु पुत्रान्तरसम्भावनासत्त्वे पितामहधनविभागे का वृत्तिरित्यत आह । अनिवृत्तेति । वृत्तिलोपः पितामहधने निरंशकत्वं । अयुक्तत्वे हेतुमाह । येजाता इति । जाता उत्पन्ना अजाताभविष्यद्गर्भसम्बन्धाः ऊर्द्धं स्वत्वावगमे रजोनिवृत्तिरूपस्वतन्त्रकालनिरासेन पुनरुपसंहरति । अत इति । अयं स्वत्वापगमकालः । प्रमाणदर्शनपूर्व्वकं कालान्तरमाह ऊर्द्धमिति । अपरः पितृस्वत्वापगमादन्यः पितुरिच्छासमयरूपः यच्छिष्टं यदवशिष्टं यथेदं नारदवचनञ्च विभागकालान्तरप्रदर्शनार्थं । किन्तु ऋणपरिशोधनावश्यंभावार्थं अन्यथा ऋणी नस्यादिति वैयर्थ्यापत्तेः ॥ ० ॥

दत्तासु भगिनीषु चेति न कालार्थम् । किन्तु । तासामवश्यन्दानार्थम् ।

तथा यच्छिष्टम्पितृदायेभ्यो दत्त्वर्णम्पैतृकन्ततः । भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद्यथा पिता । इदं नारदवचनम् । पित्रर्णशोधनावश्यम्भावार्थं न विभागकालार्थम् । अस्माच्च नारदवचनादयमर्थः सिध्यति । यद्विभागकर्तृभिरुत्तमर्णानुमत्यैव पित्रादि

ऋणं विभजनीयम्परिशोध्यं वा शोधनावशिष्टधनविभागप्रतिपादनस्यैव तत्प्रयोजनत्वात्। अतएव मातृधनस्यापि ऋणावशिष्टस्यैव विभागमाह याज्ञवल्क्यः। मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः। एतच्च विस्तरेण स्त्रीधनदाने वक्ष्यते। यदा दत्तासु भगिनीषु मातृधनम्पुत्रैरेव विभजनीयम्। अदत्तासु ताभिः सह साधारणमेतच्चावसरे वाच्यम्। एवन्तावत्पितृधनविभागस्य कालद्वयमप्युक्तम्। सम्प्रति पितामहधनविभागकालोऽभिधीयते। तत्र वृहस्पतिः। पित्रोरभावे भ्रातॄणां विभागः सम्प्रदर्शितः। मातुर्निवृत्ते रजसि जीवतोरपि शस्यते। नास्य वचनस्य पितृधनगोचरत्वं। ऊर्द्ध्वं विभागाज्जातस्त्वित्यस्य निर्विषयत्वापत्तेः ॥ ० ॥

तथादत्तास्विति भगिनीदानावश्यंभावार्थमित्यर्थः एतत्प्रयोजनत्वादृणपरिशोधनावश्यंभावप्रतिपत्तिमात्रप्रयोजनत्वात्। अतएव ऋणपरिशोधनस्यावश्यकत्वादेव। ताभ्यऋते दुहितृभ्योविना। तदन्वयोदुहितृभ्रातृभ्यां तत्राह। एतच्चेति। वक्ष्यते मातुरन्वयइति व्यवस्थापयिष्यते। पक्षान्तरमाह। यदेति। मातृधनमयौतकं यौतके दौहित्रपर्य्यन्ताभावएव

पुत्राधिकारस्य वक्ष्यमाणत्वात् । तथाच दत्तासु भगिनीषु चेतिमातुरयौतकधनविषयमिति भावः । अवसरे प्रकृतधन समाप्तौ स्त्रीधनविभागप्रकरणे । उक्तं व्यवस्थापितं । न्यायवच नाभ्यामितिशेषः । पितृधनविभागकाले कथिते पितामहधन विभागकालस्याकाङ्क्षितत्वात्तं वक्तुम्प्रतिजानीते । सम्प्रतीति । निर्विषयत्वे हेतुमाह । निवृत्ते रजसीति ॥ ० ॥

निवृत्ते रजसि पुत्रोत्पत्तेरभावात् । मातृधन विषयत्वञ्चास्य नाशङ्कनीयम् । एवं मातुरेव निर्धनत्वापत्तेः । अतोनिवृत्तेरजसीति पितामहादि धनविषयम् । नचेच्छामनपेक्ष्य रजोनिवृत्तेर्विभाग निमित्तत्वं सम्भवतीति । अनिच्छया विभागाभा वात् । सत्यामिच्छायां कस्येच्छयेत्यपेक्षायां ऊर्द्ध्वं पितुः पुत्रारिक्थं विभजेयुः । निवृत्ते रजसि मातु र्जीवति चेच्छतीति गौतमवचनात् पितुरेवेच्छात इतिनिर्णीयते ॥ ० ॥

अथ पित्रोरभावइति वचनम्पितृधनविषयम् । ऊर्द्ध्वं विभा गाज्जातस्त्विति पैतामहधनविषयमितिवैपरीत्यमेव कुतो न स्यात्पितामहधने पितुः पुत्रेभ्यः स्वेच्छाकृतन्यूनाधिकदान

स्यापि निषेधेन उत्पद्यमानपुत्रनिरंशिताया: सर्व्वथैव निषिद्धत्वात् । तचैव मातृरजोनिवृत्तेः सहकारित्वौचित्यात् । नच पिचा स्वयं गृहीते' इत्यत्र तदनन्तरमस्यैवाधिकारात् न निरंशितेति वाच्यं। तस्य पितृपभोगोपक्षीणत्वे निरंशिताया दुर्व्वारत्वात् । पैतृके तु तस्य स्वेच्छा स्वयमुपात्तेऽर्थे इति विष्णुवचनेन इच्छायानियामकत्वाभिधानात् । इच्छयोत्पत्स्यमाननिरंशितायामप्यविरोधात् । न तत्रास्य सहकारितेति । अतएव वृत्तिलोपो विगर्हित इति प्रागुक्तवचने वृत्तिपदं पितामहधनपरमिति सुधीभिर्भाव्यं। निर्द्धनत्वापत्तेरिति । रजोनिवृत्तिमाचेण तस्याः स्वत्वनाशे पुचाणां तद्धनविभाग इत्यर्थः । उपसंहरति अतइति । यतोन पितृधनगोचरत्वमत इत्यर्थः । ननु निरपेक्षश्रुतिबलात्पितुरनिच्छयापि मातृरजोनिवृत्तौ पुचाणां विभागःस्यादतआह । नचेच्छामिति विभागनिमित्तत्वं विभागोपधायकत्वं। अनिच्छयेति स्वारसिकेच्छां विनेत्यर्थः । विभागाभावादिति । विभागस्य दृष्टार्थकतया स्वारसिकेच्छाधीनत्वनियमादित्यर्थः । सत्यामपेक्षितायामिच्छायां । कस्य पितुः पुत्रस्य वा पितुरेवेच्छातइति । जीवति चेच्छतीत्यनयोरिच्छाजीवनयोः सामानाधिकरण्यानुरोधादिति भावः । तेन तदानीमपि विभागे पितुरेव स्वामित्वात् स्वातन्त्र्यं न पुत्रेच्छया विभागोऽस्वामित्वे नास्वातन्त्र्यादित्यभिहितं

यथाश्रुतन्तु न संगच्छते इच्छायां सामानाधिकरण्यकृतिद्वारा विभागप्रयोजकत्वस्य सिद्धत्वे न तत्र कस्येत्याकाङ्क्षानुदयात्। तत्प्रतिपादनस्य प्रकृतानुपयोगित्वाच्चेति द्रष्टव्यम्॥ ०॥

अतः पित्रोरभावइत्येकः कालः। पित्रोरिति द्विवचननिर्देशात्सोदरभ्रातॄणाम्पितृधनविभागोपि मातुरभावएव कार्य्यः। ननु मातृधनविभागार्थं मातुरभावस्योपादानं जीवतोरपीत्यस्य मातृधन गोचरत्वानुपपत्तेः अन्यधनगोचरत्वमवश्यंवाच्यम् तेन यत्रैव पित्रोरभावोनिमित्तन्तत्रैव जीवतोर पीत्यपिशब्देन जीवनस्यापि प्रशस्तत्वकीर्त्तनान्नमातु रभावोमातृधनेव्याख्येयः॥ ०॥

अतइति। यतोवृहस्पतिवचनस्य न पितृधनविषयत्वमत इत्यर्थः एकः कालः पितामहधनविभागइतिशेषः। अथवा यतोऽपत्यसम्भावनाभावः। पितुरिच्छासहकृतएव विभाग निमित्तत्वन्तु स्वातंत्र्येणातइत्यर्थः। एकः कालइति पितुरिच्छा सहकृतमातृरजोनिवृत्तिकालादतिरिक्तः कालइत्यर्थः। अन्यथा मरणादावप्यपत्यसम्भावनाविरहस्याप्यविशिष्टत्वेन पित्रोरभावइति पृथक्कालोनाभिहितः स्यादिति भावः। अतोऽ

स्तनोपसंहारार्थत्वम् । तेन वक्ष्यमाणतस्मादित्युपसंहारेण सह न पौनरुक्त्यमिति द्रष्टव्यम् । एतेनास्याप्युपसंहारार्थमित्यभिप्रायेण लिखिष्यमाणतस्मादित्युपसंहारे पुनरुपसंहरेतीति पूत्तामपि लिखनमपर्य्यालोचनविजृम्भितमिति बोध्यम् ननु पित्रोरिति साहित्यमविवक्षितमेव । अन्यथा जीवति पितरि मातुरभावेपि साहित्यावच्छिन्नाभावसत्त्वात् । विभागप्रसङ्गात् । तथाच द्विवचनस्यावैयर्थ्याय पितुरभावो मातुरभावश्चेति द्वयं विभागतानिमित्तं स्यात् । ननु पितुरुपरममात्रमवेष्टापत्तिमाह । पित्रोरितीति । विमातुर्माहत्वाभावात् । तत्सत्त्वे सपत्नीपुत्राणां विभागे बाधकाभावइत्यर्थबललभ्यमाह । सोदरभ्रातॄणामिति कार्य्यइति प्रथमस्य इत्यर्थः । अतएव वक्ष्यति सापि मातरि जीवन्त्यां न धर्म्यइति तथाच मातुरभावो विभागप्राशस्त्यमात्रनिमित्तं ननु विभागे पितुरुपरमानन्तरमेव पुत्राणां धनस्वामित्वे न विभागे स्वातन्त्र्यात् । अदृष्टार्थत्वकल्पनायाश्च अन्याय्यत्वादितिभावः । अस्य उक्तवचनस्य । मातृधनगोचरत्वानुपपत्तेरिति । मातुर्निर्धनत्वापत्तेरितिशेषः अन्यधनगोचरत्वं मातृधनातिरिक्तधनगोचरत्वं तत्रैवेति । सन्निहिते बुद्धिरन्तरङ्गा इति न्यायादुपस्थितविभागएव नत्वनुपस्थिते विभागान्तरइति भावः ॥ ० ॥

एतच्च विस्तरेण वाच्यम्। तस्मात्पितामहादि धनस्यापि पित्रोरभावइत्येकोविभागकालः। तथा मातुर्निवृत्ते रजसि पितुरिच्छातइत्यपरः। नतु पितुरिच्छामन्तरेणैव तस्य विभागः। अनीशास्तेहि जीवतोस्तथा अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते। तथा जीवति चेच्छतीति। तथा पितुरनुमत्या दायविभागः। तथाजीवति पितरि रिक्थ विभागोऽनुमतः। तदेवमादिमनुनारदगौतमबौधायनशङ्खलिखितादिभिरविशेषेण जीवति पितरि पुत्राणां यावद्धनगोचरास्वामित्वस्य पितुरिच्छाधीनविभागस्य च प्रतिपादनात्पैतामहधनविभाग कालस्य च पृथगेभिरनभिधानात् पैतामहधन गोचरत्वमप्यनीशत्वंपित्रनुमतिवचनानाम्। यत्तु याज्ञवल्क्यवचनम्। भूर्यापितामहोपात्ता निबन्धो द्रव्यमेव वा। तत्र स्यात्सदृशं स्वाम्यम्पितुः पुत्रस्य चोभयोः। तस्य निरवद्यविद्याद्योतनेन द्योतित स्तत्त्वतोयमर्थः। यत्र द्वयोर्भ्रात्रोर्जीवत्पितृकयोर प्राप्तभागयोरेकः पुत्रमुत्पाद्य विनष्टोन्योजीवति अनन्तरम्पितामृतस्तत्र पुत्रएव तद्धनमाप्नोत्विति सन्निकर्षात्। तदर्थं सदृशं स्वाम्यमिति वचनम्॥०॥

ननु तर्हि मातृधनविभागे किं निमित्तमत आह। एतच्चेति वाच्यं मातृधनविभागावसरे इति शेषः। उपसंहरति तस्मादिति। विशेषाभिधानाय पुनराह नत्विति। उक्तवचनानां पितृधनविभागप्रकरणनियन्त्रितत्वात्। तद्विषयकत्वशङ्का मपनेतुमाह। पैतामहेति तथाच प्रकरणमपि साधारण मितिभावः। पैतामहे पितुरेव स्वामित्वे याज्ञवल्क्यवचन विरोधमपनेतुमाह। यत्त्विति सदृशं स्वाम्यमिति। यथाश्रुतार्थ मादाय विरोधोबोध्यः तस्य उक्तवचनस्य। निरवद्येति निरवद्या उत्कृष्टा या विद्या सैव दिवाकरः तस्योद्योतेनोदयेन द्योतितः प्रकाशित इत्यर्थः गुणसिन्धुरित्यादौ सिन्धुपदार्थसामर्थ्यात् यथा गुणे जलत्वं व्यञ्जन्तथोद्योतपदार्थसामर्थ्यात् विद्यायां दिवाकरत्वं व्यङ्ग्यमिति। पुत्र एव नतु मृतपितृकपौत्रस्य तदर्थं मृतपितृकपौत्रस्य प्राप्त्यर्थन्त्वेवेति। एतेन मृतपितृकपौत्राणां बहूनामपि मिलित्वैकोभागः पितृव्यस्य चापरोभागो नतु तेषां प्रत्येकस्य पितृव्येण सह तुल्यांशतेति प्रतिपादितं॥०॥

यथा पैतामहधने पितुः स्वाम्यन्तथैव तस्मिन्मृते तत्पुत्राणामपि न तत्र सन्निकर्षविप्रकर्षाभ्यां कोपि विशेषः। पार्वणविधिना पिण्डदानेन द्वयोरपि तदुपकारकत्वाविशेषादित्यभिप्रायः। अतएव मृत

पितृकः प्रपौत्रोपि पुत्रपौत्राभ्यां सह तुल्याधिकारी भवति पिण्डदत्वाविशेषात् । जीवतितु पितरि पुत्राणां धनस्वामित्वे सपुत्रापुत्रभ्रातृद्वयविभागे तत्पुत्राणामपि भागःस्यात्स्वामित्वाविशेषात् । तथा चाप्रक्रान्तत्वेनातदर्थत्वं वचनस्यानेकपितृकाना मेव प्रक्रमात् निबन्धः कार्त्तिक्यां कार्त्तिक्यामिदन्दा स्यामीति यन्निबन्धनन्द्रव्यं भूसाहचर्य्याद्द्विपदमभिहि तम् ॥ ० ॥

अतएव उपकारस्याविशेषादेव पिण्डदत्वाविशेषादिति तेन पुत्रपदस्यार्वणाधिकारिसगोत्रोपलक्षणम्पितामहपदञ्च पार्वणोद्देश्यपितृपूर्व्वपुरुषपरम्पितृपदं अंशिपूर्व्वपुरुषधन्य पत्यपरमिति बोध्यम् । नत्वेवं मृतपितृकप्रपौत्रस्य प्रपितामह धने पितामहेन सह तुल्याधिकारः स्यादुपकारविशेषादि तिचेन्न तस्य प्रपितामहपार्वणनियमात्पितामहे जीवति तु पितर्य्येव समापयेदित्याद्युक्तेः अतोनियततत्पार्व्वणकर्त्तुः पितामहस्य तदपेक्षयोपकारिविशेषस्य स्फुटत्वादिति निरवद्य वचनस्य सङ्कोचेन सामान्यतएव पौत्राणां पित्रा सह पितामह धने तुल्यस्वामित्वे बाधकमाह । जीवतित्विति स्वामित्वाविशेषा दिति भवन्मतइतिशेषः तथाच व्यवहारविरोधइतिभावः ।

इदमुपलक्षणं। एवञ्चेत्पुत्रेच्छयापि विभागप्राप्ते मातुर्निवृत्ते रजसि जीवति पितुरिच्छाधीनविभागप्रतिपादकप्रागुक्तशास्त्र विरोधो द्रष्टव्यः। अतदर्थत्वमिति द्रव्ये मृतपितृकभ्रातृपुत्रेण सह पितृव्यस्य तुल्यस्वामित्वविषयकत्वं प्रक्रमादिति। अनेक पितृकाणान्तु पितृतोभागकल्पनेत्यनेनानेकपितृकाणामेव प्रक्रान्तत्वादित्यर्थः। अत्रानेकपितृकाणामेकपितृकभिन्नानां विभिन्नपितृकाणामित्यर्थः। निबन्धः प्रतिवर्षं प्रतिमासादि वा दातव्यत्वेन प्रतिश्रुतवस्तुरूपइतिव्याचष्टे निबन्धइति साहचर्यादिति। स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितं इत्यादि वक्ष्यमाणे भूदिपदयोरेकक्रियान्वयादित्यर्थः ॥ ० ॥

अयमत्र धारेश्वरपुरस्कृतो वचनार्थः। इच्छया विभागदानप्रवृत्तस्य पितुः पैतामहधने सदृशं स्वाम्यम्। पुत्रैः सह न तत्र स्वोपार्जितधनइवन्यू नाधिकविभागमिच्छातः कर्त्तुमर्हतीति।

यथा विष्णुः पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे तु पितापुत्रयोस्तुल्यं स्वामित्व मिदं सुव्यक्तम्। यदि पिता पुत्रान्विभजति तदा स्वोपात्तेऽर्थे न्यूनाधिकविभागं स्वेच्छया पुत्रेभ्यो दद्यात्। पैतामहे तु नैतत् यस्मात्तत्र तुल्यं स्वामित्वं। न पुनः पितुः स्वच्छन्दवृत्तिता ॥ ० ॥

नन्वेवं द्रव्यपदस्य द्विपदपरत्वे पैतामहमणिमुक्तादिद्रव्यं पितृव्यस्यैव स्यात् तथाविधपौचादीनां द्रव्यसामान्यपरत्वे भूम्यादीनाम्पृथगुपादानं व्यर्थं स्यात् गोवृषन्यायात् भूमिद्विपद्योः प्राशस्त्यार्थमेव पृथगुपादानं स्यादत्यर्थम्न्यायपर्य्यवसायितया सात्त्वतोदुर्ब्बलत्वादकिञ्चित्करमिति चेत्तथापि उपकारित्वाविशेषात् । प्रतिपौचम्पितृव्येण सह तुल्यांशित्वापत्तौ शिष्टाचारविरोधइति विभाव्याह । अथवेति । अथं वक्ष्यमाणः तमेवाह । इच्छयैति उक्तार्थे मुनिस्वरसमाह । यथेतिस्वरसं प्रकाशयति इदमिति । अत्रायम्भावः यदि विष्णुवचने स्वेच्छैव विभागप्रयोजिकाइत्यर्थकल्पनया स्वार्जिते पुचेच्छाव्यावर्त्यते तदा पैतामहे पुचेच्छयाऽपि विभागः प्रसज्येत तच न सम्भवति स्वार्जिते पुचाणां स्वामित्वाभावेन तेषामिच्छया विभागाप्रसक्तेः वचनवैफल्यात् । जीवति चेच्छतीति प्रागुक्तेन विरोधश्च स्यात् । अतः स्वोपात्तेऽर्थे स्वेच्छान्यूनाधिकविभागप्रयोजिकेत्येवार्थः एवं च सति व्यवच्छेदबोधकतुशब्दबलात्स्वेच्छया पैतामहे न्यूनाधिकविभागप्रयोजकत्वव्यवच्छेद एव लभ्यते इत्येतदेवाह यदीति । नैतत् नस्वेच्छया न्यूनाधिकविभागदानम् । नपुनरिति । स्वच्छन्दवृत्तितान्यूनाधिकदानाधिकारिता तथा चोक्तार्थे तुल्यं स्वामित्वमिति लाक्षणिकः प्रयोगः सचणायेयं उक्तयुक्तिप्राप्ता न दूषणावहेति भावः ॥ ० ॥

अतः पितापुत्रयोः पैतामहधने समविभागार्थं सदृशं स्वाम्यमिति वचनं पुत्राणां विभागः स्वातन्त्र्यार्थमिति मतद्वयमपि हेयम्। एवमेवापरमपि वचनं व्याख्येयम्। अतः पैतामहादिधने पितुर्भागद्वयं पितुरिच्छात एव विभागो न पुत्रेच्छयेति सिद्धम्। यच्च मनुविष्णू। पैतृकन्तु पिता द्रव्यमनवाप्तं यदाप्नुयात्। न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितं। स्वार्जितत्वेन हेतुना नाकामो विभजेदिति वदन्तौ स्वयमर्जिते पैतामहधने पितुरनिच्छयापि पुत्राणां विभागन्दर्शयतस्तत्रापि विभागदानप्रवृत्तेः पिता पितामहधनं स्वार्जितं नाकामो विभजेत् अन्यत्पुनरकामोपि विभजेदिति सेच्छयैवेत्यर्थः। न पुनः पुत्रेच्छया विभागं ज्ञापयता मणिमुक्तादौ तु पुनः पैतामहे पित्रनर्जिते स्वार्जितद्दव पितुरेव स्वाम्यं न्यूनाधिकविभागदानार्हत्वञ्च ॥ ० ॥

अत इति। यतउक्तार्थपरतयोपपत्तिरतइत्यर्थः। मतद्वयमिति मिताक्षराकृत्प्रभृतीनामिति शेषः हेयमिति सम विभागः पुत्राभिरमणीयः पुत्रेच्छया विभागस्तु निरस्तएवेति भावः। एवमेव पितामहधने पौत्राणां पितृकृतविषमविभाग

निषेधपरं तथैव भागद्वयमिति जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयमित्यादिवचने भागद्वयस्य वक्ष्यमाणत्वात् सिद्धवन्निर्देशः। पितुरिच्छात इति जीवति यच्छतीति प्रागुक्तेरिति भावः। न पुत्रेच्छयेत्यत्र वचनान्तरविरोधमपनेतुमाशङ्कते। यथेति। पैतृकमन्यैरपहृतं अनवाप्तं अंश्यन्तरैरनुद्धृतमवाप्नुयात्स्वयमर्जितमिति वदन्तौ मनुविष्णू इत्यन्वयः। ननु कामनां विना कथं विभागकृतिः कामनासाध्यत्वादत आह। स्वेच्छात इति। अस्वारसिकेच्छातः प्रत्यवायभयमात्रजनितेच्छात एवेत्यर्थः। एवं च प्रकारान्तरेण जीवनक्षमेषु स्वोद्धृतभूम्याद्यंशादानेन प्रत्यवायः अनुद्धृते न्यूनाधिकदानस्यैव निषिद्धत्वादिति बोध्यम्। ज्ञापयन्तीति जीवति प्रागुक्तविरोधादिति भावः। पित्रनर्जिते पित्रनुद्धृते स्वाम्यं स्वातन्त्र्यं तदेव विवृणोति न्यूनाधिकेति ॥०॥

तथा याज्ञवल्क्यः। मणिमुक्ताप्रवालानां सर्व्वस्यैव पिता प्रभुः। स्थावरस्य तु सर्व्वस्य न पिता न पितामहः। पितामहश्रुतेस्तद्धनविषयकं वचनं मणिमुक्ताद्युपादाय पुनः सर्व्वस्येत्युपादानात्सर्व्वेषाम्भूम्यादिव्यतिरिक्तानां दानादिषु पितुः प्रभुत्वं न स्थावरनिबन्धद्रव्याणाम्। तत्रापि सर्व्वस्येत्युपादानात्

स्सर्व्वस्य कुटुम्बवर्त्तनहेतोर्दानादिनिषेधः। कुटुम्ब स्यावश्यं भरणीयत्वात्।

यथामनुः। भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम्। नरकम्पीडने चास्य तस्माद्यत्नेन तम्भरेत् अल्पस्य तु वर्त्तनाविरोधिनो न दानादिनिषेधः। सर्व्वस्येत्यानर्थक्यापत्तेः स्थावरग्रहणान्निबन्धद्विपदयोर्दण्डापूपन्यायाद्दानादिनिषेधसिद्धिः॥०॥

पितामहश्रुतेरिति। पितृस्थावरादौ पितामहप्रभुत्वस्याप्रसक्तेरितिभावः। पुनः सर्व्वस्येति वचनभेदान्मण्यादीनां विशेषणत्वासम्भवेन पृथगुपादानस्य सुवर्णादिद्रव्यान्तरप्राप्त्यर्थत्वादिति भावः। नचैवं सर्व्वस्येत्यनेनैव सिद्धौ मण्यादीनां पृथगुपादानवैयर्थ्यं एतस्योपलक्षणत्वात्सुवर्णादिषु कस्य प्रभुत्वमिति जिज्ञासाया अपि निवर्त्त्यत्वात्। गोवृषन्यायाद्वा पृथगुक्तिरिति। पोष्यवर्गस्येति। सच पिता माता गुरुर्भार्य्या प्रजा दीनाः समाश्रिताः। अभ्यागतोऽतिथिश्चैव पोष्यवर्ग उदाहृतइतिमनुनैवोक्तः। आनर्थक्यापत्तेरिति। अल्पस्यापि दाननिषेधे सर्व्वस्येत्यस्य वैयर्थ्यापत्तेरित्यर्थः। स्थावरग्रहणादिति। त्रयाणां युगनद्धवाहित्वादिति भावः। ननु निबन्धद्विपदयोः कथं स्थावरग्रहणात्सिद्धिः तयोः स्थावरपदार्थत्वा

भावात् अतआह । दण्डेति तथाचापदार्थत्वेऽपि न्यायादेव तत्सिद्धिरित्यर्थः स च न्यायोयथा दण्डविद्धापूपानान्दण्डान्तमादवश्यमानयनन्तथा युगनद्धवाहित्वात् । एकस्यायहणा द्परयोरपिसिद्धिरिति केचिदाहुः । वस्तुतस्तु एकत्र स्थापितयोर्दण्डापूपयोर्यदापूपोनास्ति दण्डस्तु मूषिकैर्भक्षितोवर्त्तते तत्र यथा मूषिकस्य दुष्करदण्डभक्षणसिद्धौ तत्सहचरितापूपभक्षणमपि सिद्ध्यति तथैकस्याप्रभुत्वे सिद्धे युगनद्धवाहित्वादपरयोरप्यप्रभुत्वं सिद्ध्यतीति समुदायार्थः । न्यायमूलकत्वात्मायिकत्वेनान्यथाप्याह ॥ ० ॥

यदि पुनः सर्व्वस्थावरादिविक्रयमन्तरेण कुटुम्बवर्त्तनमेव न भवति तदा सर्व्वस्यापि विक्रयणादिकं इत्यर्थात्सिद्ध्यति ।

सर्व्वत एवात्मानं गोपायीतेति वचनात् ।

नच स्थावरस्य समस्तस्य गोत्रसाधारणस्य च । नैकः कुर्य्यात्क्रयं दानम्परस्परमतं विना । विभक्ता अविभक्तावा सपिण्डाः स्थावरे समाः एको ह्यनीशः सर्व्वत्र दानाधमनविक्रये । एतद्व्यास वचनद्वयेन एकस्य विक्रयाद्यनधिकार इतिवाच्यम् यथेष्टविनियोगार्हत्वलक्षणस्य स्वत्वस्य द्रव्यान्तर

द्रवाचाप्यविशेषात् । व्यासवचनन्तु स्वामित्वेन दुर्वृत्तपुरुषगोचरविक्रयदानादिना कुटुम्बविरोधात् अधर्म्मभागिताज्ञापनार्थं निषेधरूपं नतु विक्रयाद्यनिष्पत्त्यर्थं।

एवञ्च स्थावरं द्विपदञ्चैव यद्यपि स्वयमर्जितम् असम्भूय सुतान्सर्व्वान्न दानन्न च विक्रयः। इत्येवमादिकन्तदप्येवमेव वर्णनीयम्॥ ०॥

यदि पुनरिति कुटुम्बवर्त्तनरूपस्य हेतोरविशेषादित्याशयः। अर्थात्कुटुम्बस्यावश्यं भर्त्तव्यत्वरूपात्। एवञ्च यत्र भूम्यादिकं नास्ति मण्यादिरेवास्ति तत्र न सर्व्वव्यये प्रभुत्वं हेतोरविशेषात्तत्प्रभुत्ववचनन्तूभयसद्भावविषयमिति द्रष्टव्यम् सर्व्वतइति। तथाच पोष्यवर्गस्यैवात्मनोऽपि रक्षार्थं कृतः सर्व्वविक्रयः कुटुम्बविरोधेऽपि सिद्ध्यतीति द्रष्टव्यम्। अत्र दायादानुमतिं विना न दानसिद्धिः कृतमपि दानन्दानाभासतया निवर्त्तनीयमिति चण्डेश्वरमतमपाकर्त्तुं प्रक्रमते। नचेति। क्रयञ्चिक्रयं। विभक्ता अविभक्तावेति। तथाच स्थावरस्येति वचनस्याविभक्तस्थावरमात्रविषयकत्वमसम्भवतीतिभावः नच विभक्तपदञ्च्यान्तरविभक्तपरं स्थावरपदञ्चाविभक्तस्थावरपरं अतोनानुपपत्तिरिति वाच्यं। तथासति एकस्यास्था

स्यादनधिकारस्य द्रव्यान्तरेऽप्यविशिष्टत्वात् । स्थावरोपादानवैयर्थ्यापत्तेरतोविभक्तस्थावरे वाचनिकोऽयं निषेधोनयौक्तिकइति । अविभक्ताेवेति वाशब्दइवार्थे ।. वा स्याद्विकल्पोपमयोरेवार्थेच समुच्चये इतिविश्वोक्तेः । अत्र स्थावरे । तथाच विभक्तस्येवाविभक्तस्थावरस्यापि स्वामिकृतदानादिसिद्ध्यत्येव । अधःपातादिना पश्चादंशपरिचयसम्भवादितिभावः यद्यपि स्वयमर्जितमिति स्वयमर्जितं द्विविधम्पैतामहमन्येन हृतस्य स्वात्तदुद्धृतं स्वयम्वाऽर्जितमविशेषात्तदुभयमपीत्यर्थः ॥ ० ॥

तथाहि कर्त्तव्यपदमवश्यमत्राध्याहार्यम् । तेन दानविक्रयकर्त्तव्यतानिषेधात् । तत्करणात् विध्यतिक्रमोभवति नतु दानाद्यनिष्पत्तिः । वचनशतेनापि वस्तुनोऽन्यथाकरणाशक्तेः ।

अतएव नारदः । यद्येकजातावहवः पृथग्धर्म्माः पृथक्क्रियाः । पृथक्कर्म्मगुणोपेतान चेत्कार्येषु संमताः । स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा । कुर्युर्यथेष्टन्तत्सर्व्वमीशास्ते स्वधनस्य वै । प्रकृतमनुसरामः ॥ ० ॥

निषेधरूपत्वे हेतुमाह । तथा हीति । अवश्यमिति । नच सिध्यति सम्भवतीत्येवं कुतोनाध्याह्रियते तथात्वे काम्येन सह समानकर्तृकत्वानुपपत्तिरितिभावः । अथाऽयं दानविक्रय निषेधोनादृष्टार्थकः किन्तु स्वत्वध्वंसानुत्पत्तिरूपदृष्टप्रयोजनकः दृष्टार्थत्वसम्भवेऽदृष्टार्थत्वकल्पनाया अन्याय्यत्वात् इत्यस्य विभिन्नस्थावरदानादौ दायादानुमतेरपि सहकारिता कल्प्यत इति नैवं क्लृप्तकारणादेव स्वाम्याद्दानादिनिर्वाहेऽतिरिक्त कारणकल्पने गौरवात् । अतएवादृष्टकल्पनाऽपि नदूषणावहा प्रामाणिकत्वादिति । अतएवेति । यतो दानादिनिष्पत्तिरतएवेत्यर्थः । एकजातादिति । धर्म्मोऽग्निचन्द्रश्रद्धा दशरात्रादि । क्रिया याजनादि । कर्म्म तपः शौर्य्यादि । गुणोमृदुचण्डत्वादिः तथाच विभिन्नजातीयमातृकादित्यर्थः कार्य्येषु एकैकक्रियमाणदानादिषु न सम्मताः । यदि इच्छुरिति सद्वृत्तगोचरदानादिविषयोऽयं निषेधस्तु दुर्वृत्तगोचर इति विभाव्यं । कुर्य्युरिति तथाचासम्मत्यापि दानादिसिद्ध्यतीति स्फुटमुक्तमिति । इत्यस्य स्थावरादावनापदि सर्व्व दानविक्रयनिषेधोऽयं मण्याद्यपेक्षया विशेषोबोध्यः । एतस्य स्वार्जितविषयत्वे तु वचनवैयर्थ्यापातादिति । प्रकृतमिति । न पितामहधने पित्रासह तुल्यांशित्वं न वापौत्रेच्छया विभाग इति प्रकृतमित्यर्थः । एतदेव विभिन्नव्यवस्थापनेनानुसराम इत्यर्थः । व्यवस्थापितवचनार्थमुपसंहरति ॥ ० ॥

तदेव मुक्तप्रबन्धेन पितामहादिधने पिता पुत्रयोः समभागविधानानुपपत्तेः । पुत्राणां विभागे स्वातन्त्र्यप्रतिपत्तिपरत्वाभावाच्च जनके च्छाधीनं न्यूनाधिकविभागनिराकरणार्थं मृत पितृकस्य भ्रातुः पुत्रस्य पितृव्येन सह तुल्याधि कारार्थं वा बचनम् । एवञ्च पितामहधनस्यापि पितुरिच्छयैव विभागः कार्य्यः । किन्तु । मातुर्नि वृत्ते रजसीति विशेषः । स्वोपात्ते तु रजोनिवृत्ति मन्तरेणापि पितुरूर्द्ध्वमिति द्वयमप्यविशिष्टम् । तेन पैतामहधनेपि कालद्वयं तत्र यदापितैवेच्छा तः पुत्रान् विभजति तदा पैतामहधनाद्भागद्वयं स्वयं गृह्णीयात् ।

जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयम् । इति बृहस्पतिना । द्वावंशौ प्रतिपद्येत विभजन्ना त्मनः पितेति नारदेन चाविशेषेण प्रतिपाद नात् ॥ ० ॥

तदेवमिति समविभागानुपपत्तेर्वक्ष्यमाणहेतोः । पुत्राणां चेत्यादि चोक्तहेतोरुक्तप्रबन्धेन जनकेच्छाधीनेत्याद्यर्थवचन

मित्यर्थः मृतपितृकस्येति । साकारोऽनास्थायां अन्यथा
भूमिनिबन्धनादावेव पितृव्येण सह तुल्यांशिता स्यात् । मणि
मुक्तादिद्रव्यान्तरस्य सर्व्वं पितृव्यस्यैव स्यादिति । तस्मान्न्यूनाधि
कविभागनिराकरणार्थमिति पूर्व्वकल्पएव साधीयानिति ।
एवञ्च पुत्राणां विभागस्वातन्त्र्याभावाच्च पितामहधनविभाग
कालमुपसंहरति । तेनेति । कालद्वयमिति मरणादिना पितृ
स्वत्वापगमः निवृत्ते मातृरजसि पितुरिच्छेति कालद्वयमि
त्यर्थः । वस्तुतस्तु पैतामहे स्वार्जिते वा पितृस्वत्वापगमकाल
एकएव विभागस्य विशेषस्तु पितामहधनविभागे मातृरजो
निवृत्तिकालस्य सहकारित्वमितिबोध्यम् । पितृकृतविभागे
ऽपि तस्यापेक्षया पुत्राणां स्वांशे स्वत्वावगमादन्यथा पितृ
स्वत्वे विद्यमाने पुत्राणां प्रागुत्पन्नस्वत्वाभावात्तद्धने दाय
त्वस्य विभागस्य चानुपपत्तेरिति भाव्यम् । ननु वचने पिता
महपदाश्रवणात्कथन्तद्धनविषयत्वमत आह । अविशेषे
स्वार्जितधनम्पितामहधनं वा विशेषतोऽनुपादानादित्यर्थः
तथाच स्वार्जितधनविषयत्वे विष्णुवचनविरोधात्पितामह
धनविषयत्वमेवास्य वचनस्येति भावः । ननु भूर्य्येत्यादिवचन
विरोधात् । पितृधनविषयत्वमेव कुतो न स्यात् । तथाच सति
पितामहधने पितापुत्रयोस्तुल्यांशितैव युक्तेति चेन्न विष्णुवचन
विरोधस्य जागरूकत्वात् वचनविधिमुक्तायुक्तिमप्याह ॥ ० ॥

किञ्च । इतोपि पितामहधनात्पितुर्भागद्वयम् ।
ज्येष्ठस्य विंशउद्धारः सर्व्वद्रव्याच्चयद्वरम् ।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः । तथा ।
एवं समुद्धृतोद्धारे समानंशान्प्रकल्पयेत् । उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना । एकाधिकं हरेज्ज्येष्ठः पुत्त्रोध्यर्द्धं ततोनुजः । अंशमंशं यवीयांसइति धर्मोव्यवस्थितः । एतैर्मनुवचनैः सर्व्वद्रव्यवरसहितविंशतदर्द्धतत्तुरीयोद्धारा दर्शिताः । तथा एकांशाधिकार्द्धांशाधिकचतुर्थभागाधिकभागाः प्रतिपादिताः ॥ ० ॥

किञ्चेति । अथ वा ननु तस्य स्वेच्छा स्वयमुपात्तेऽर्थेइति विष्णुवचनस्य पुत्त्रेभ्योन्यूनाधिकदाने स्वेच्छा इत्येवार्थ इतिविभागे तु तस्य स्वोपात्ते तु द्वांशित्वमुक्तवचनाभ्यां पैतामहे तु भूर्य्येत्यादिवचनस्य यथा श्रुतार्थानुरोधात्तुल्यांशितैव न्यूनाधिकविभागनिषेधपरत्वे लक्षणापत्तिरतोयुक्तिमभिधास्यति किञ्चेति । इतइति । वक्ष्यमाणप्रबन्धयुक्तेरित्यर्थः विंशः विंशतेः पूरणः उद्ध्रियते साधारणधनाद्विभिर्भाज्यते इत्युद्धारः परं श्रेष्ठं यत्किञ्चित् भूरत्नादिकं । एवञ्च ज्येष्ठस्य दशमभागं न्यायतस्तस्य दापयेदिति देवलवचनं विंशोद्धा

राद्यपेक्षया ज्येष्ठस्याविषमगुणवत्त्वे बोध्यम्। मध्यमशब्दोऽत्र ज्येष्ठानन्तरजपरः। तदनुजाश्च सर्व्वैव यवीयः पदार्थान्तर वचनेऽध्यर्द्धं ततोऽनुजस्याभिधानात्। अंशमंशं यवीयस इतिवीप्सावलात्सर्व्वेति बोध्यं। उद्धारेऽनुद्धृते इति सोदर माचक्रियमाणविभाग इत्यर्थः सोदरासोदरविभागेतु विंशो द्धारादिकमेव एतच्च सोदरासोदराभिप्रायकं कल्पद्वयं विद्यादिगुणवतां ज्येष्ठादीनामिति वक्ष्यते। एकाधिकमिति एकमधिकभागस्तेन भागद्वयमित्यर्थः। अध्यर्द्धमिति। अधि अधिकं अर्द्धं तेनार्द्धाधिकमेकभागं अंशमंशमित्यत्रापाधिक पदार्थान्वयः। तेन पादस्यादमधिकं तथाच सपादैकभाग मित्यर्थः॥०॥

गौतमेनापि विंशतिभागोज्येष्ठस्य मिथुनमुभयतोदद्युक्तोरथोगोवृषः। मिथुनमजादीनां उभयतोदत् अश्वादि तद्युक्तोरथः गोयुक्तोवृषः एतत्सर्वं ज्येष्ठस्य। तथा।

काणखोरकूटवण्डामध्यमस्यानेकश्चेत् खोरो वृद्धः कूटोवामनाकृतिः। वण्डोविकृतलाङ्गूलः एते मध्यमस्य यदि बहवोभवन्ति पशवः। तथा। अविर्द्धान्यायसी गृहमनोयुक्तं चतुष्पदाञ्चै

कैकं यवीयसः सममितरत् सर्व्वं । अविप्रभृतयः कनीयसः । अवशिष्टं सर्व्वं समं विभजेरन्निति प्रतिपाद्य । द्व्यंशी वा पूर्व्वजः स्यादेकैकमितरेषामिति वचनेनांशद्वयं ज्येष्ठस्योक्तम् । न चोपार्ज्जकत्वेन ज्येष्ठस्यांशद्वयमिति वाच्यम् । उद्धारेऽनुद्धृते भागद्वयस्य विधानात् । अर्जकत्वे चोद्धारस्याप्रसम्भवात् ॥ ० ॥

मिथुनं स्त्रीपुंसौ तौ च पशुप्रस्तावात् पशूनामेव । तत्र गोः पृथगुपादानादाह । अजादीनामिति । आदिना मेषादिसंग्रहः । ननु गोवृषइत्यत्र नद्वन्द्वसम्भवः समाहारपक्षे पुंलिङ्गानुपपत्तेः इतरेतरपक्षे एकवचनानुपपत्तेश्चेत्यत आह । गोयुक्तइति । तथा च मध्यपदलोपिसमासाश्रयणेन तत् पदं साधु नात्र द्वन्द्वइति भावः । अनेकार्थदित्यनेन तेन तेषामेकत्वे ज्येष्ठप्राप्योद्धारानुरूपमेव कल्प्यं । अत्र ज्येष्ठस्यापि मनूक्तविंशोद्धारतैव । गोतमेन मनुवचनादधिकमुक्तन्तद्व्यस्तगुणवत्त्वे बोध्यम् । एकैकमितरेषामित्यपि तेषां निर्गुणत्वे बोध्यम् । गृहमिति पितृवस्थानातिरिक्तगृहमित्यर्थः । गृहं यवीयसोऽन्यच पितुरवस्थानादिति शङ्खवचनात्पूर्व्वजस्य द्व्यंशित्वाभिधानस्य ज्येष्ठतामयुक्तद्विन्त्वअंकप्रयुक्तमेवेत्याशङ्कते । न चेति उद्धारस्यासम्भवादिति । अयमाशयः । उद्धारेऽनुद्धृते इत्य

भेन यत्र विषये उद्धारप्रवृत्तिस्तत्रैव विषये भागद्वयविधानं उद्धारस्य ज्येष्ठत्वपुरस्कारेणैव श्रुतौ निर्जकत्वेनेति । यद्यपि उद्धारः सोदरासोदरविषयः द्व्यंशादिकन्तु सोदरमात्र विषयइत्यस्ति विषयभेदः तथापि ज्येष्ठपुरस्कारेणैव उद्धार विधानात् । सोदरमात्र विभागेऽपि ज्येष्ठस्य तत्प्रवृत्तिरस्ती त्याशयः ॥ ० ॥

मध्यमकनीयसोस्वोपार्जकतया ज्येष्ठेनाप्यवि शेषात्तयोरध्यर्द्धादिविधानानुपपत्तेः । ज्येष्ठपदा नर्थक्याच्च । अतएव पुत्रिकौरसयोः पितृधन ।वभागे ।

मनुरपि । पुत्रिकायां कृतायान्तु यदि पुत्रोनु जायते । समस्तत्र विभागः स्याज्ज्यैष्ठता नास्तिहि स्त्रियाः । इति स्त्रीत्वेन ज्येष्ठत्वाभावात् समभाग तां प्रतिपादयन् पुरुषस्य भागद्वयम्प्रतिपाद यति ॥ ० ॥

ननूद्धारेऽनुद्धृते इत्यनेन उद्धाराद्यविषये द्व्यंशित्वविधी यते उद्धारद्व्यंशित्वयोः सोदरासोदरविषयत्वेन भिन्नविषयत्वा त्किन्तु भ्रातृविभागाभावेनोद्धाराभावेन समभागबाधकत्वात्तत्

सएवमादितया समभागसमर्थनः सुतपितार्जकत्वेनैव श्रेष्ठत्वमभिधीयते। तथाविधविषयत्वे श्रेष्ठत्वस्यान्यायभावयुक्तिकत्वादतआह। मध्यमकनीयसोरिति। अध्यर्द्धादीति। अधिकार्द्धाधिकपादविधानेत्यर्थः। तयोरध्यर्द्धादिभागस्य वाचनिकत्वे लघुत्वकल्पनागौरवमिति भावः। ननु सर्व्वत्रार्जकत्वेनैव श्रेष्ठत्वम्। मध्यमकनीयसोरध्यर्द्धादिविधानन्तु सर्व्वसमाल्पाल्पतरत्वादिनाऽप्युपपन्नम। न बाधकमतआह। ज्येष्ठादिपदेति अर्जकत्वेनैव श्रेष्ठत्वे मध्यमादीनामपि तद्विशिष्टतायास्सर्व्वसिद्धत्वात्। ज्येष्ठपदस्यानर्थक्यादितिभावः। ज्येष्ठादीत्यादिपदात्पुत्रादिपदसंग्रहः। अतएवेति। यतएव ज्येष्ठत्वेनैव श्रेष्ठत्वमतएवेत्यर्थः। भागद्वयमिति। ननु ज्येष्ठस्य विषमभागमेव ज्ञापयति मनुः। वैषम्यञ्चोद्धारभागेऽपि सम्भवात्कथं भागद्वयज्ञापनमिति चेन्न। उद्धारस्य भागवैषम्याप्रयोजकत्वात्। एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेदिति वचनात्। नचैवं स्त्रियामपिविंशोद्धारः स्यात्तावतापि समभागसम्भवादिति वाच्यम्। उद्धारस्य ज्येष्ठत्वपुरस्कारेणैव श्रुतेः स्त्रियाञ्च तदभावात्तदिदमुक्तं ज्येष्ठतामाश्रीति॥०॥

यदुक्तम्। होलाकाधिकरणे प्राच्यकर्तृकहोलाकानुष्ठानोपपत्तये होलाका कर्त्तव्येति श्रुतिः कल्पिता।

मात्रतैव तदुपपत्तेः नतु प्राच्यादिपदवती
कल्पनागौरवात् । तद्वदत्राप्यर्जकांशद्वयं गृह्णीयां
दिति श्रुतिः कल्पनीया नपुनः पित्रादिपदवतीति
तदयुक्तम् । तत्र प्राच्यकर्तृकस्यानुष्ठानस्यावश्य
कल्पनीयसामान्यश्रुत्यैवोपपत्तेः । नचाप्राच्याना
मननुष्ठानार्थम्प्राच्यपदवती कल्प्यतामिति वाच्यम्
तेषामननुष्ठानस्यानाचाररूपस्य श्रुतिकल्पनानि
मित्तत्वानुपपत्तेरिति । इह तु मन्वादीनां ज्येष्ठ
पदप्रयोगात्तदुपपत्तये ज्येष्ठपदवत्या एव श्रुतेः
कल्पनार्हत्वादर्जकपदवत्या अवश्यकल्पनीयत्वा
भावात् ज्येष्ठपदवत्याअर्जकपदवत्याश्च कल्पनायां
विशेषप्रमाणाभावात् ॥०॥

यदुक्तमिति । होलाका वसन्तोत्सवविशेषः प्राच्यैः क्रियते
प्राच्यादीत्यादिपदाद्दाक्षिणात्यक्रियमाणकरञ्जार्कपूजारूपो
ऽप्याचारोपपत्तये कल्पनीयश्रुतौ दाक्षिणात्यपदपरिग्रहः ।
न पित्रादीति । तथाच पितुरपि अर्जकत्वे नैव भागद्वयं
नान्यथा तेन तस्यापि स्वार्जितधन एव द्व्यंशित्वं नान्यत्रेति मत
मस्य सामान्यश्रुत्यैवेति प्राच्यादिपदघटितश्रुत्यैवेत्यर्थः
श्रुतिकल्पनानिमित्तत्वेति । आचारस्यैव साधनमित्यनेना

चारस्यैव वेदमूलकत्वाभिधानात् अनाचारस्यैवेति भावः ननु श्रुतौ प्राप्यपदाश्रवणेऽप्याचाराणामपि तन्मात्रस्वेच्छाकारकरणात्प्रत्यवायापत्तेः। आचारस्य नित्यत्वे प्रमाणाभावात्। तदुपपत्तये ज्येष्ठपदसार्थक्याय ज्येष्ठपदवत्या इति श्रुतेः स्वसमानार्थकस्मृतिमूलत्वादिति भावः। तथाचाचारे पदविरहात्पदवैयर्थ्यापत्तिरूपबाधकविरहेण सामान्यश्रुतिरेव तत्र कल्प्यते। स्मृतौ तु ज्येष्ठपदवैयर्थ्यापत्तिरूपबाधकसत्त्वात्। न सामान्यश्रुतेः कल्पनमपि तु ज्येष्ठपदवत्या एवेति भावः। अवश्येति। यथा ज्येष्ठपदवत्या अवश्यकल्पना न तथा अर्जकपदवत्या अवश्यकल्पना द्व्यंशी वा पूर्व्वजः स्यादित्यादावर्जकपदाश्रवणात्। अर्जकोऽंशमर्हतीत्यस्य तु निरपेक्षार्जकत्वपुरस्कारेणैव श्रुतिकल्पकत्वं तत्र ज्येष्ठपदाश्रवणादिति भावः। ननु ज्येष्ठार्जकपदवतीभ्यां स्मृतिभ्यामेकमूलत्वकल्पना लाघवेन ज्येष्ठोऽर्जकोंऽशं गृह्णीयात्। इत्येकैकश्रुतिः कल्प्यते। तावताऽपि ज्येष्ठस्यार्जकत्वपुरस्कारेणैव द्व्यंशित्वमिति सिद्धमेवेत्यत आह। ज्येष्ठपदवत्या इति। प्रमाणाभावादिति निरपेक्षप्रवृत्तायामेकैकस्मृतौ पदद्वयाश्रवणादिति भावः॥०॥

नचान्यत्रार्जकस्य भागद्वयार्थं श्रुतेरवश्यं कल्पनीयत्वादत्रापि सैव मूलमस्तु लाघवात् ज्येष्ठ

यद्यस्यार्जकपरमस्त्विति वाच्यम् । वैपरीत्यस्यापि सम्भवात् । अत्रैव ज्येष्ठपदयुक्तश्रुतिकल्पनाया मर्जकपदस्यापि ज्येष्ठपरत्वकल्पनासम्भवात् । विनिगमनाप्रमाणाभावात् । किञ्चैवं लाघवादिना यत्किञ्चिच्चतुरादिपदवतीमेकां श्रुतिमनुमाय सकलस्मृतिपदानां गौण्या लक्षणया वा वृत्त्या तत्परत्वमपि वाच्यमित्यतीवात्मनः स्मृतिनिपुणता निरूपिता । तस्माद्यस्मादेवाचारात् स्मृतिवाक्याद्वा या श्रुतिरवश्यं कल्पनीया तयैव तद्गतस्याचारांशस्य स्मृतिपदस्य च उपपत्तेर्न तत्राधिककल्पनेति होलाकाधिकरणस्यार्थः । अतएव वशिष्ठेन ज्येष्ठस्यांशद्वयमभिधाय उपार्जकस्याप्यंशद्वयं पृथगभिहितम् ॥०॥

तथात्वे कनिष्ठार्जकानामद्व्यंशित्वे सर्वतन्त्रविरोधोऽपि द्रष्टव्यः । अत्रैवेति । विनिगमनेति । लक्षणायाउभयत्रापि विशिष्टतया तस्यावश्यकल्पनमस्य वेत्येकतरग्राहकप्रमाणाभावादित्यर्थः । अथ पितृव्यादीनामपि साधारणेनार्जकत्वे द्व्यंशित्वमुभयवादिसिद्धमित्येतदेव विनिगमकमस्तीत्यत आह । किञ्चेति । लाघवादित्यादिना एकत्र विप्रतिपत्तिरन्यत्र उभयवादिसिद्धत्वरूपविनिगमनासंग्रहः । स्मृतिनिपुणतेति । तस्या

मुख्यार्थस्य प्रथमोपस्थितत्वात्। लक्षणायां गौरवात्। तात्पर्य नाभावाच्च। शब्दाभ्यां मुख्यार्थबोधकत्वस्थितौ कथं ज्येष्ठादि पदानामर्जके लाक्षणिकत्वमस्त्विति भावः। तर्हि कास्य न्यायस्य विषय इत्यत आह। तस्मादिति। अवश्यकल्पनीयेति। ज्येष्ठादिपदवतीकल्पनेऽपि लक्षणा कर्तव्येति भागद्वयस्य कल्पनादिति भावः। आचारांशस्य आचारविषयस्य स्मृतिपदस्य स्मृतिविषयस्य। अतएवेति। यतएव ज्येष्ठत्वमर्जकत्वञ्च परस्पर भेदापेक्षेण द्विविधत्वप्रयोजकमत एवेत्यर्थः। पृथगभिहितमिति। तथा चैकमुनिवचनयोरेकवचनवैयर्थ्यापत्त्या एकवाक्यत्वासम्भवाच्च तथात्वमिति भावः। पृथगभिधायकतद्वचनमाह॥०॥

यथा। अथ भ्रातॄणां दायविभागो द्व्यंशं ज्येष्ठो हरेत्। ततोऽनतिदूरे पुनराह। येन चैषां समुत्पादितं स्यात्सोऽपि द्व्यंशमेव हरेत्। अनेनार्जकतया भागद्वये दर्शिते ज्येष्ठस्यांशद्वयाभिधानमनर्थकं स्यात्। द्व्यंशहरत्वमपि न ज्येष्ठतामात्रेण। यदाह बृहस्पतिः। जन्मविद्यागुणज्येष्ठो द्व्यंशन्दायादवाप्नुयात्। समांशभागिनस्त्वन्ये तेषां पितृसमस्तु सः। उपार्जकत्वेन भागद्वये जन्मविद्याकीर्त्तनमनुपयोगि एतच्च भागद्वयं सोदरमात्र

आत्मविभागविषयम् । सोदरासोदरविभाग गोचरस्य ज्येष्ठस्य विंशोद्धारः ।

यदाह वृद्धशातातपः । समवर्णासु ये जाताः सर्वे पुत्रा द्विजन्मनाम् । उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे समम् ॥ ७ ॥

अर्थेति । येनेति । एषां भागिनां मध्ये येनार्जितं तेऽर्जित धनात् द्व्यंशं हरेदित्यर्थः । ज्येष्ठता आदिगर्भप्रभवता । जन्म विद्येति । यथा चैतद्वचनानुरोधाज्जघन्यस्य जन्मविद्यादि ज्येष्ठपरत्वावश्यकत्वे कथमर्जकपरत्वमयमावह इति भावः । अनु पघातेति । तत्रार्जनस्यैवोपघातित्वादिति भावः । सोदरा सोदरेति । उपलक्षणमेतत् । असोदरमात्रविषयोऽप्ययमिति भाव्यम् । उद्धार इति । द्व्यंशत्वेनांशेऽधिकांशे गोद्धारः अवि भक्तद्रव्यात् तस्य पृथगक्रियमाणत्वादिति भावः । समवर्णा स्विति । विषमवर्णासु जातानाञ्च ब्राह्मणादिपुत्राणां क्रमेण चतुस्त्रिद्व्येकभागित्वमिति वक्ष्यते द्विजन्मनामित्यनेन शूद्रस्य विंशोद्धारनिवृत्तिः तन्निवृत्त्या च दण्डापूपन्यायात् । द्व्यंश स्यापि निवृत्तिः अतएव मनुरपि । शूद्रस्य तु सवर्णैव नान्या भार्य्योपदिश्यते । तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत् । इत्यनेन शूद्रस्य समांशमेव विदधाति । न च द्विजन्मनामि त्युपादानात् समवर्णास्वित्यत्र बहुवचनोपादानाच्च सोदरा

तादृशां द्विजन्मनामेवोद्धारविधिः शूद्रविधिस्तु तदन्येषां सोदरभ्रातॄणां द्विजन्मनां । सामान्यतः शूद्रस्यानुक्तावप्येव विज्ञेयादिति वाच्यम् । पूर्व्वोक्तमनुवचनैरुद्धारशूद्रयोः समानविषयत्वावगमात् । उद्धाराविषये शूद्रे शूद्रत्वाभयोक्तेः वस्तुतस्तु ज्येष्ठशूद्रस्याप्युद्धारो युक्तः । तस्यापि पुत्रामनरकनिवर्त्तकत्वेनाधिकोपकारकत्वात् । अधिकधनसम्बन्धस्याधिकोपकारनिबन्धनत्वात् । दृहस्य निवचने समवर्णास्विति विषमवर्णाजातानां विषमविभागसूचनार्थं । अतएव शूद्रस्य विषमवर्णाजाताभावेन सूचनीयस्य विषमभागस्य तथासम्भवात्तद्धारस्यार्थं द्विजन्मनामिति कृतम् । न तु शूद्रस्योद्धारनिषेधार्थं युक्तिविरोधात् न च मनुना समानांशाभिधानात्तद्विरोधः उद्धारस्य भागवैषम्यप्रयोजकत्वात् । यथोक्तम् । उद्धारस्त्रावे दत्वा भजेरन्नितरे सममितिभाव्यम् ॥ ० ॥

सवर्णासु बह्वीषु स्त्रीषु जातानां उद्धारपूर्व्वकविभागश्रुतेर्भागद्वयं सोदरमात्रगोचरमेव सिद्ध्यति युक्तञ्चैतत् । सोदरतयाधिकगौरवात् । उद्धारोऽपि दशसु गवादिषु न कार्य्यः ।

तथा मनुः । उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्मसु । यत्किञ्चिदेव देयं स्याज्ज्यायसे मान

वर्द्धनम्। तदेव मूलप्रबन्धेन यच्च ज्येष्ठभ्रातुरेव पितृधने भागद्वयं कथं तत्र जनकस्य दानविक्रय परित्यागक्षमस्य पितामहधनसम्बन्धमूलस्यापि गुरोः पितुरेव स्वपितृधने भागद्वयं न सम्भवति जन्मविद्यागुणज्येष्ठ इति वाक्ये नच पितृसमत्वे न भागद्वयञ्ज्येष्ठस्यातिदिशन् पितुर्भागद्वयं ज्ञापयति।

बृहस्पतिः। जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वयमिति सामान्येनांशद्वयाभिधानादुपदेशो बृहस्पतिना दर्शितः ॥०॥

इतरे सममिति ज्येष्ठस्य सगुणत्वे इतरेषां निर्गुणत्वे इदम्। तेन नाध्यर्द्धादिभागविधिविरोधः। नच द्व्यंशविधिर्जन्मविद्यादिज्येष्ठविषयोऽस्तु उद्धारविधिस्तु तदितरज्येष्ठविषय इति निर्गुणस्यापि उद्धार इति तेन सोदरासोदरसाधारणी व्यवस्थेति वाच्यम्। समवर्णास्विति बहुवचनानुपपत्तेः भवन्मते एकस्यामुत्पन्नानामपि तथात्वस्य सिद्धेः। दशस्विति। तत्पर्य्यन्तेष्वित्यर्थः। स्वकर्म्मसु सक्तानामित्यनेन सर्व्वेषान्तुल्यगुणवत्त्व एव। तदधिकगुणवत्त्वे तु ज्येष्ठस्य तत्रापि विंशोद्धार इति पूजामतिः। बृहस्पतिवचनमपि पितुर्ज्येष्ठत्वे प्रमापयति

द्विति चारीरोक्तस्य च विरोधादित्यर्थः। केचित्तु । इतोऽपी त्यादि पितामहधनमेव परभागद्वययुक्तिविरोधादित्याहुः । तदसत् । पितामहधनस्वामित्वयुक्तेः पितृधनस्य स्वामित्ववि रोधाप्रसक्तेः । पितामहधने पितापुत्रयोस्तुल्यस्वामित्वे बाधकम प्याह । किञ्चेति । मध्यगत्वापत्तेरिति । मध्यगत्वञ्च उभय निरूपितस्वत्वद्वयवदेकद्रव्यम् । अथैवम्पितरि मृते सत्याम्मा तरि विमातरि वा पुत्राणां स्वत्वामुदयः स्यात् । मात्रादि स्वत्वस्य विरोधिनः सत्त्वात् । नच पितृमरणादेव तासां स्वत्व नाशेऽन्यमरणस्यान्यस्वत्वनाशकत्वे प्रमाणाभावात् । नचो भयनिरूपितस्वत्वं व्यासज्यवृत्त्येकमेव स्वत्वप्रतियोगिनाशा देव नश्यतीति वाच्यम् । तथा सति पत्न्यां मृतायान्तद्धने पत्युः स्वत्वनाशप्रसङ्गात् । मातृधनान्तरस्येव तत्पुत्रकन्यादी नामधिकारप्रसङ्गात् । किञ्च । पत्न्यां जीवन्त्यां स्वधनस्य पर स्वत्वेन निर्णीतस्य विनियोगे प्रतिबन्धः पत्युः स्यादिति चेन्नै वम् । पितृमरणानन्तरम्पुत्राधिकारप्रतिपादकशास्त्रस्यैव पतिमरणात् पत्नीस्वत्वनाशे प्रमाणत्वात् । अत एव पुण्यापुण्य फले धर्मेष्वपि सङ्गच्छते । अन्यथा पत्न्याः पतिधर्मे स्वत्वा भावे तदनुपपत्तेरित्यादि सुधीभिर्भाव्यम् ॥ ० ॥

जायापत्योरिव विभागाभावप्रसङ्गात् । एवञ्च सति भ्रातृणां विभागे यदा ज्येष्ठस्य ज्येष्ठतया

भागद्वयकल्पनन्तदा तत्पुत्रस्यापि भागद्वयकल्पने पुत्रेण सह ज्येष्ठस्य चत्वारोंऽशाः भ्रातृन्तरस्यैकोंऽशः स्यात्। बहुपुत्रत्वे च ज्येष्ठस्य तत्पुत्राणाञ्चितसम भागकल्पने कनिष्ठभ्रातुर्यत्किञ्चिदेव स्यादिति महाजनविरोधः। यच्च वृहस्पतिवचनम्।

द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा। सममंशित्वमाख्यातम्पितुः पुत्रस्य चैवहि। अंशित्वं समं समानम्। नच स्वेच्छया स्वोपात्तधनवन्न्यूनाधिकविभागं दातुमर्हति। नपुनरंशः समइति तस्यार्थः। द्विपितृकापिचभिप्रायम्वा समभागवचनम्। नच स्यात्सदृशं स्वाम्यमिति वचनन्तु प्रागेव व्याख्यातम्॥०॥

विभागाभावेति। यथैव पितुः स्वत्वन्तथैव पुत्रस्यापीत्यभ्युपगमे विभागानन्तरमपि तदवधारणात्। वैशेषिकव्यवहाराणां तावन्नावस्थादितिभावः। बहुपुत्रत्वे चेति। पूर्व्वं सपुत्रापुत्रभ्रातृद्वयविभागे तत्पुत्रस्यापि भागद्वयेतावन्मात्रमुक्तम्। इह तु कनिष्ठस्याल्पप्राप्तिरिति विशेषान्नपुनरुक्तिः। यत्तेति। जङ्गमोक्तिपद एव। स्थावरस्योपचर्य्यात्। समानमिति। समानमेवेत्यर्थः। लवणफलमात्र। नचेति। मत्यन्तरपक्षे।

तत्रांशद्वयवचनमनावश्यकमित्यभिप्रायेणाह । द्विपितृकेति । यद्येकपुत्रः स्यादितिवचनमात्रमृषिवचनानुरोधादितिभावः । पूर्वमविकृत तथात्वे इत्युक्तं भूर्या पितामहोपात्ता इत्यनेनैकवाक्यत्वादिति सहेतुकं व्याख्याय । ननु पंक्तिस्थांशानतिरिक्ततया कथमंशित्वसाम्येऽपि वैषम्यम् । तथाच स्थावरजङ्गमपदस्योपलक्षणतया द्रव्यसामान्यपरत्वात् कुतो भूर्य्येत्यादिनैकवाक्यत्वसम्भव इत्यत आह । द्विपितृकेनेत्याह । तदयुक्तम् । वक्ष्यमाणसिद्धान्ते भूर्य्येत्यादिना तस्य वचनस्य तुल्यविषयतया वक्ष्यमाणत्वात् । उक्तव्याख्ययैव सामञ्जस्याच्च । पितामहधने पितुर्द्व्यंशित्वे प्रसक्ते युक्त्यन्तरमाह ॥ ० ॥

किञ्च । यद्यसौ पिता स्वपितुः पुन्नामनरकनिवर्त्तकोज्येष्ठस्तदा तस्य स्वभ्रातॄनेवापेक्ष्य यत्र पितृसमत्वेन भागद्वयं सुतरां तस्य पुत्रापेक्षया भागद्वयं युक्तं पुत्राणां क्रमागतधनसम्बन्धस्य पित्रधीनत्वात् । अथ यः पितुर्न ज्येष्ठः पुत्रस्तस्य स्वपुत्रैः सह समांशतोच्यते । तत्र मध्यमादिपुत्राणामप्यध्यर्द्धादिविधानात् । पितृतया भागद्वयस्यैव सुतरां युक्तत्वात् । सामान्येन च पितापुत्रयोः समांशाभिधानस्य भवतोमुनीनां चानुचितत्वात् । किञ्च ।

पितुरंशद्वयाभिधानं स्वोपात्तद्रव्यगोचरमित्यनुपपन्नं। तदिच्छानुरोधित्वाद्विभागस्य इच्छातश्च भागद्वयत्रयन्यूनाधिकानामपि प्राप्तेर्विफलो विधिः नियमार्थत्वञ्च वचनस्य न वर्णनीयम्। विष्णुविरोधात्तदाह।

पिता चेत्पुत्रान् विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे तु पितापुत्रयोस्तुल्यं स्वाम्यं। अस्यार्थः स्वोपात्ते यावदेव गृहीतुमिच्छति अर्द्धं भागद्वयन्त्रयं वा तत्सर्वन्तस्य शास्त्रानुमतम्। नतु पैतामहेऽपि।

तथाच हारीतः। जीवन्नेव वा पुत्रान् प्रविभज्य वनमाश्रयेत्। वृद्धाश्रमं वा गच्छेत्। स्वल्पेन वा विभज्य भूयिष्ठमादाय वसेत्। यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात्। अनेन स्वल्पस्य विभागो भूयिष्ठद्रव्यस्य ग्रहणञ्च पितुरभिहितम्। वृद्धाश्रमः प्रव्रज्या॥ ८॥

किञ्चेति। ननु उक्तयुक्त्या नरकनिस्तारकपुंस्त्वेन पुत्रस्य पितुः पैतामहधने द्व्यंशित्वं तत्कर्त्तुश्च कनिष्ठपुत्रस्य पितृसाहूने पुत्रैः सह समांशिताख्य वचनानां सामञ्जस्यादित्याशङ्कते। अथेति। मध्यमादिपुत्राणामेव सार्द्धांशादिविषयताहारकत्वं यत्र तत्र ततोन्यूनस्य एकांशमात्रस्य पितुः

पितृत्वेनाभिधानात् अत्यन्तमेव युक्तमिति भावः। मनुवचन मते पितापुत्त्रयोस्तुल्याधिकारित्वमेवोच्यते। तथाच प्राप्त स्यात्। ज्येष्ठेनैव पितुः समांशाधिकारिता भविष्यति। तत्कथं न्यूनत्वमत आह। सामान्येनेति। सामान्येन समांशित्वमित्यादौ अविशेषेणेत्यर्थः। अनुचितत्वादिति। तथाचैकपुत्त्रस्य पितुर्द्व्यंशित्वम्। द्विपितृकस्य तु क्षेत्रजादेः पितुश्च समांशित्वमित्यु वोचितमिति भावः। पितुरंशद्वयविधानस्य स्वोपात्तविषयत्वा सम्भवात्। पितामहधनविषयत्वमेवेत्याह। किञ्चेति। उपद स्येत् भुक्तसर्व्वधनं स्यात्॥ ०॥

यच्च शङ्खलिखितवचनम्। स यद्येकपुत्त्रः स्यात् द्वौ भागावात्मनः कुर्य्यात्। अस्यायमर्थः। एकस्य पुत्त्रः एकपुत्त्रः। न पुनरेकएव पुत्त्रोयस्य इति बहुव्रीहिः। तस्यान्यपदार्थप्रधानत्वेन षष्ठीतत्पुरुषाद्दुर्ब्बलत्वात्। एकपुत्त्रश्चौरसः। तथा विधस्य पितुर्भागद्वयम्। नतु क्षेत्रजस्य पितृत्वेपि तत्र स्यात्तद्द्वयांशस्वाम्यमिति वचनेन। क्षेत्रजपितृअभिप्रायमेव वर्णनीयम्। क्षेत्रजोहि द्विपितृकः।

तदाह बौधायनः। मृतस्य च प्रसूतोयः क्लीवस्य व्याधितस्य वा। अन्येनानुमतोवा स्यात्

स्वक्षेत्रे क्षेत्रजः स्मृतः। स एव द्विपितृको द्विगोत्रश्च द्वयोरपि स्वधाकरो रिक्थभाग्भवति । अस्यार्थः। क्लीबादेः स्वे क्षेत्रे तदनुमतोऽन्येन प्रसूतः क्षेत्रजः। तथा नारदः। क्षेत्रिकानुमते क्षेत्रे बीजं यस्य प्रकीर्य्यते। तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्म्मतम् ॥ ० ॥

भागद्वयवचनं स यद्येकपुत्रः स्यादित्यनेनैकमूलतया एकपुत्रकपितृविषयमिति मतमपाकर्त्तुन्तद्वचनमन्यथा व्याख्यातुमुत्थापयति । यद्येति दुर्ब्बलत्वादिति । एकदेशलक्षणापेक्षया समुदाये लक्षणागौरवप्रसक्तादिति केचित्। तदसत्। समुदाये शक्त्यभावे न लक्षणायाः प्रसक्तेः। वस्तुतस्तु तत्पुरुषे उत्तरपदं मुख्यमेव पूर्व्वपदन्तु सम्बन्धिनि लाक्षणिकमत्र तु द्वयोरेव पदयोर्मुख्यार्थत्यागात्तदपेक्षया दुर्ब्बलत्वमिति औरसस्यापि पितुर्भागद्वये क्षेत्रजस्य पुत्रेण सह तुल्यांशित्वस्थितौ तद्विषयतया सहत्वं साम्यमिति वचनस्य मुख्यत्वसम्भवे न्यूनाधिकविभागनिषेधेन लक्षणा अन्याय्येत्यभिप्रेत्याह । तच्च स्यादिति। द्विपितृकमाह। क्षेत्रजो हीति। मृतस्य चेति क्षेत्रेऽन्येन प्रसूत उत्पादितः क्लीबादेः क्षेत्रे वा तदनुमतोऽन्येनोत्पादित इत्यर्थः यद्येकपुत्रोद्देशेन भागद्वयविधानात्। अविरुद्धत्वात् । यद्येकत्वञ्च उद्देश्यविशेषणतया एकपुत्र

त्वविशेषणमविवक्षितम्। किन्तु। पक्षप्राप्तानुवादमात्रं यतः सर्व्वेषामेव भागद्वयमित्यभिप्रायः ॥ ० ॥

अतश्चैकपुत्रश्चात्मनोभागद्वयं कुर्य्यादिति विधौ एकपुत्रत्वस्य कर्त्तृविशेषणतया विवक्षार्हत्वात्। उद्देश्यविशेषणत्वे नाविवक्षितत्वमित्यपि परास्तम्भवति। किञ्च। परमप्रेक्षावन्मनुगौतमदक्षादिप्रयुक्तपदानामतिलक्षणमविवक्षामाचक्षाणाः स्वस्यैव साक्षादविवक्षितत्वं ख्यापयन्ति। तथापुत्रार्जितेऽपिधने पितुरंशद्वयं द्वावंशाविति। गृह्णीतांशद्वयमिति चाविशेषश्रुतेः।

सुव्यक्तमाह कात्यायनः। द्व्यंशहरोऽर्द्धहरोवा पुत्रवित्तार्जनात्पिता। मातापि पितरि प्रेते पुत्रतुल्यांशभागिनी। पुत्रस्य वित्तार्जनात्पितुर्द्व्यंशहरत्वं अर्द्धहरत्वं वेत्यस्यार्थः। न च पुत्रश्च वित्तञ्चेति पुत्रवित्ते तयोरर्जनात्। पिता द्व्यंशहरः पुत्रार्ज्जनात्तु सर्व्वहरइतिवाच्यम्। अनर्जितपुत्रस्यापि भ्रातृभिर्व्विभागे वित्तार्जकतया अंशद्वयस्येष्टत्वात्। कथं सर्व्वहरत्वम्। अतोविभागार्हसम्बन्धिनि विद्यमाने अर्जकस्य द्व्यंशित्वं असति तु सर्व्वहरत्वं

स्वत्वम् । तथाच पितापुत्रपदयोः प्रमाणसीमता स्यात् । किञ्चार्जनं स्वत्वहेतुभूतव्यापारः अर्जनं स्वत्वं नापादयतीति विप्रतिषिद्धमित्यभिधानात् ॥०॥

अतश्चेति कर्तृविशेषणतयेति । एकपुत्रत्वरूपात्मसम्बन्धि भागद्वयस्य विधेयतया एकपुत्रत्वं विधेयविशेषणमेव नतूद्देश्य विशेषणं येनाविवक्षितं स्यादिति भावः । केचित्तु कर्तुराख्यात वाच्यत्वेन विधेयतया तद्विशेषणस्यैकपुत्रत्वस्य द्विपिटकन्या वर्त्तकत्वेन प्रयोजनकतया विवक्षितमित्याहुः । स्वधनातिरि क्तधने पितुर्भागद्वययुक्तिदार्ढ्यार्थमाह । तथेति । पुत्रवित्तार्ज नादिति । स्वं शब्दत्वाद्यन्वयानुरोधात् । इदिहितो भावो द्रव्य वत्प्रकाशते इति व्युत्पत्तेः पुत्रार्जितवित्तादित्यर्थः । नचेति तथा च पुत्रार्जितवित्तेन पितुर्र्जितत्वं येन द्व्यंशभागत्वमुक्त द्वार्थं स्यादिति भावः । पितापुत्रयोः पितापुत्रपदयोः । ननु विभागोऽर्थस्य पित्र्यस्य इत्येव पितापुत्रपदं सम्बन्धिमात्रो पलक्षणं सामान्यकल्पनायां लाघवस्य मूलत्वादत आह । किञ्चेति । विप्रतिषिद्धं विरुद्धमन्यथा चार्जनं स्वत्वमापादये दित्यर्थः अभिधानात्प्रामाणिकैरितिशेषः ॥०॥

न च पुत्रेषु स्वत्वमस्तीति सर्व्वस्वदानं प्रदर्शितं अतस्तत्र गौणमर्जनपदम् । वित्ते च मुख्यम् ।

यत्रैव तत्क्रतुत्वं सम्भवति। नच पुत्रेणार्जितत्वात्पुत्रस्य द्व्यंशप्राप्तेः पितुश्च भागद्वयस्यास्माद्वचनादन्तेऽपि प्राप्तेः समभागत्वापातादिदं विधानमनर्थकमिति वाच्यम्। एतद्वचनमन्तरेणापि पुत्रधने पितुर्भागद्वयस्याप्राप्तेर्वचनस्यार्थवत्त्वात्॥ ०॥

दर्शितमिति। तत्र पुत्रदाननिषेधस्य स्वत्वाभावेन न्यायमूलत्वादिति भावः। सम्भवतीति। सकृदुच्चरितः शब्दः सकृदेवार्थं गमयतीति न्यायात् युगपद्वृत्तिद्वयविरोधाच्चेति भावः तेन न द्वन्द्वगर्भतत्पुरुषः सम्भवतीति भावः। द्व्यंशप्राप्तेरिति। अर्जकोद्व्यंशमाहरेदिति वचनात्पितुर्भागद्वयं स्वकीतांशद्वयमिति सामान्याभिधानादिति भावः। अनर्थकमिति अर्द्धहरत्वाभिधानमनर्थकमित्यर्थः। इदमुपलक्षणम्प्राप्तिर्दिष्ट द्व्यंशहरत्वमादाय विरुद्धार्थकत्वमपि बोध्यम्। भागद्वयस्याप्राप्तेरिति। द्व्यंशार्द्धरूपद्विविधभागस्याप्राप्तेर्नियमेनाप्राप्तेरित्यर्थः। तथाच भृत्यार्जितवत्सर्व्वस्यैव स्वाम्याद्ध्यधिकपक्षस्यापि प्राप्तेर्नियमार्थं पक्षद्वयमुक्तमिति भावः। विरुद्धार्थकत्वञ्चैतयोर्विषयभेदस्य वक्ष्यमाणतया निरसनीयमिति। ननु पुत्रे स्वत्वमस्त्येव अन्यथा विक्रयस्यैव दानस्य न मेयाः शुरस्त्विष्टः। दारान् पुत्रांश्च सर्व्वस्वमात्मन्येव नियोजयेत्।

आपत्काले च कर्त्तव्यन्दानं विक्रयएव च । अन्यथा न प्रवर्त्तेत इति शास्त्रार्थनिश्चयः । इति कात्यायनेन विरोधः स्यादत एव माता पितृदत्तविक्रीतौ दत्रिमक्रीतौ मनुराह । यत्तु पुत्रदारोपक्रमे नारदेनोक्तम् । आपत्स्वपि च कष्टासु वर्त्तमानेन देहिना । अदेयान्याहुराचार्य्या यच्चान्यस्मै प्रतिश्रुतमिति तत्पुत्रादीनामनिच्छाविषयमिति न विरोधः । न च मन्वादिभिरर्जनगणनमध्ये अपत्योत्पादनस्य गणनात् । कुतः पुत्रे स्वत्वं कात्यायनादिवचनस्यैव तस्य स्वत्वहेतुत्वे प्रमाणत्वात् । सर्व्वस्वदाने तु वचनबलादेव पुत्रस्यादानम् । अतएव स्वकुटुम्बाविरोधेन देयं दारसुतादृते । इत्युपपद्यते । अन्यथा स्वत्वाभावादेव तदप्राप्तेस्तदनर्थकं स्यात् अत आह ॥७॥

किञ्च पुत्रवित्तार्जनादित्यस्य पितृधनविषयत्वे पितुरिच्छातो द्व्यंशहरत्वमर्द्धहरत्वञ्चेत्यनुपपन्नम् । इच्छानुरोधित्वाद्धरणस्य इच्छायाश्चानियतत्वात्सार्द्धसपादपादोनांशग्रहणस्यापि सम्भवात् । कथम्पक्षद्वयमात्रकीर्त्तनं नियमार्थत्वञ्च पितृधनगोचरत्वञ्च सम्भवतीत्युक्तम्प्राक् । अत्र च पुत्रार्जितवित्तस्य यथा द्व्यंशहरत्वन्तथा तस्यैव वित्तस्यार्द्धहरत्वमिति युक्तम् । न पुनर्द्व्यंशस्यार्द्धमेकोंऽशश्च

श्रुत्यर्थं वचनम्। अर्द्धस्य शुल्कस्य चैकदेशत्वेन एकदेशस्याकांक्षितत्वात्। पुरुषविशेषणतयाचार्जकर्त्तृत्वेन च द्वयोः समत्वात्। परस्परसम्बन्धानुपपत्तेश्च। वित्तार्जनादिति पञ्चम्यन्तेन शुल्कस्यैकदेशान्वयार्थोपादानस्याविवादादर्द्धपदेनापि तस्यान्वयो युक्तः। वित्तार्जनार्द्धपदयोश्चाव्यवधानाद्वित्तस्यैवार्द्धं प्रतीयते ॥ ० ॥

किञ्चेति। नियमार्थत्वं पक्षद्वयनियमार्थत्वमुक्तम्। तच्च स्वञ्चेति। स्वत्वेन वा विभज्य भूयिष्ठमादाय दद्यादित्याभ्यामिति शेषः। तथा चानपत्यपुत्रार्जितविषयत्वं वचनस्येति भावः। एकदेशत्वेन स्वसम्बन्धिकत्वेन। एकदेशस्य सम्बन्धिलक्षणस्य। ननु तयोः सम्बन्धिसाकाङ्क्षत्वेऽपि शुल्कस्य पुत्रवित्तरूपसम्बन्धिना अर्द्धस्य तु शुल्करूपसम्बन्धिना अन्वयोऽस्त्वित आह। पुरुषेति। यथाच गुणानाञ्च परार्थत्वादसम्बन्धः समत्वात्स्यादिति जैमिन्युक्तन्यायेन। द्वयोर्विशेषणयोः परस्परं नान्वयसम्बन्ध इति भावः। वित्तार्जनादिति पञ्चम्यन्तेन शुल्करूपैकदेशस्य योऽन्वयः तदर्थोपादानस्य तदर्थं शुल्कोपादानस्य। अविवादात् भवतोऽपि सम्मतत्वात्। अर्द्धपदेनापि तदन्वयो युक्तत्वं। शुल्कस्य तु पञ्चम्यन्तानुपस्थित्या तदन्वयो न युक्त

इति शेषः । पद्मत्वमनेनेति पाठे । विभागेनादि[illegible] मितिवक्तव्यः तत्परामर्शश्चैतत् उपादानमेतावतः ख्यापयि तत्वात् । पद्मत्वमनेन यत्र प्रथमं [illegible] यत्तिविक्रमादित्याह । विभागेनेति । अत्र यानन्यपित्र्य धनाभाववत्त्वेवायत्तिघटकतयावरपूर्वविभागपदैर्धनवधानेऽपि नावश्यमनुपपत्तिरितिध्येयम् ॥ ० ॥

न पुनर्द्व्यंशस्यार्द्धमेकोंऽशः प्रतीयते । स्वायत्ते चैकांशपदे प्रयोक्तव्येऽवाचकपदप्रयोगस्यान्याय्यत्वादित्तस्यैवार्द्धं युक्तम् । तत्र पितृद्रव्योपघातेन पुत्रार्जितवित्तस्यार्द्धं पितुरर्जकस्य पुत्रस्यांशद्वयमितरेषामेकैकांशिता । अनुपघातेतु पितुरंशद्वयं अर्जकस्यापि तावदेव इतरेषामनंशित्वम् । यद्वा । विद्यादिगुणसम्पन्नस्य पितुरर्द्धहरत्वं विद्यादिना ज्येष्ठस्यैवाधिकांशदर्शनात् । विद्यादिशून्यस्य जनकतामात्रेण द्व्यंशित्वम् । तेन क्रमागतधनाद्वा पुत्रार्जितधनाद्वा भागद्वयम्पिता स्वयं गृह्णीयात् ।

अतोऽधिकमिच्छन्नपि नार्हतीति वचनार्थः । स्वार्जितधनात्तु यावदेव ग्रहीतुमिच्छति तावदेव गृह्णीयात् । पुत्राणान्तु पितामहधनादिंशोद्धारं

हीनाङ्गत्वेन वा विभजेत्स्वोपार्जितधनात्पुत्रान्गुणवत्त्वेन सम्मानार्थं बहुकुटुम्बत्वेन वा भरणार्थं अयोग्यत्वेन वा कृपया भक्तत्वेन वा प्रसन्नतयाधिकदानेच्छुर्न्यूनाधिकविभागं कुर्व्वन् धर्म्मकारी पिता।

तदाह याज्ञवल्क्यः। न्यूनाधिकविभक्ताना न्धर्म्यः पितृकृतः स्मृतः ॥०॥

नपुनरिति। तस्यान्वयिना हर इत्यनेन व्यवधानात्पञ्चम्यन्तत्रयस्याचेति भावः। द्व्यंशेनान्वये तात्पर्य्याभावमाह। स्वायत्त इति। अवाचकपदस्येति। एकांशत्वेनावाचकार्द्धपदस्येत्यर्थः। अन्याय्यत्वादिति। तथाच तदन्वयतात्पर्य्यमितिभावः। द्व्यंशार्द्धयोर्विषमशिष्टतया विषयैक्ये विरोधाद्व्यवस्थितविकल्पमाह। तथेति। नन्वथाप्यर्द्धपर्य्यवसाने द्व्यंशाभिधानमनर्थकमत आह। यदेति। इदञ्च पितुर्गुणवत्त्वनिर्गुणवत्त्वाभ्यां अर्द्धहरत्वद्व्यंशहरत्वाभिधानं अंशिन्यनेकस्मिन् पुत्रे वेदितव्यम्। एकस्मिंस्त्वंशकपुत्रे अंशिनि गुणवति पितरि द्व्यंशित्वं निर्गुणेऽर्द्धमिति वैपरीत्यं नैयायिकं सुधीभिर्भाव्यम्। द्वावंशाविति। ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युःसमांशिन इति वक्ष्यमाणवचनादित्याशयः। पितामहधने पितुरिच्छया न्यूनाधिकदाने निरस्ते पितुः स्वार्जितमात्रपर्य्यवसायिवक्ष्यमाणन्यूनाधिकविभागकारणमाह। स्वोपार्जितधनादिति। धर्म्मका

दीति । तथा च शास्त्रान्तरकारणं विना स्वार्जितधने पुत्राणां विषमविभागो न धर्म्य इति भावः ॥ ० ॥

तथा बृहस्पतिः । समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः । तथैव ते पालनीया विनेयास्ते स्युरन्यथा ।

नारदश्च । पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः । तेषां स एव धर्म्यः स्यात्सर्व्वस्य हि पिता प्रभुः । सर्व्वधनप्रभुत्वस्य हेतुत्वात् । पैतामहे च तदसम्भवात् । न्यूनाधिकविभागः पितृकृतः पितृधनविषय एवायं धर्म्यः ।

तथा च विष्णुः । पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे पैतामहे तु पितापुत्रयोस्तुल्यं स्वामित्वम् ।

ननु विभागञ्चेत्पिता कुर्य्यादिच्छया विभजेत्सुतान् । ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिन इति याज्ञवल्क्यवचनात् । उद्धाररूपश्रेष्ठभागावगतेः कथन्ततो न्यूनाधिकत्वमभिधीयते । उच्यते उपरते पितरि भ्रातृभिरपि विभागे क्रियमाणे विंशोद्धाररूपश्रेष्ठांशस्य सिद्धत्वाद्वचनानर्थक्यान्न तदर्थत्वम् ॥ ० ॥

विनैवाद्यत्याः पितृधनविषयएवेति । स्वार्जितधनविषय एवेत्यर्थः पैतामहइति । यद्यपि पितामहसर्व्वधनप्रभुत्वमपि पितुरस्वतन्त्रमेव तथापि प्रभुत्वमिच्छनस्वामित्वं किन्तु यथेष्टविनियोगयोग्यत्वं सर्व्वस्मिन् पैतामहे पितुर्न तथात्वमिति भावः । याज्ञवल्क्यीयं न्यूनाधिकविभागवचनं विभागञ्चेत्पिता कुर्य्यादिति वचनस्य स्वार्जिते पितामहधने वा सामान्यत एव सोद्धाररूपश्रेष्ठभागविषयमित्यभिप्रायेण प्रकृते । नन्विति । श्रेष्ठभागावगतिः समभागावगतेश्च । कथमिति । तद्दोयैतद्वचनेनैव तस्य प्राप्तत्वात् विधानानुपपत्तेरिति भावः । अतएव वैयर्थ्यं स्यादतएव न तदर्थत्वमित्याह । उच्यतइति । वचनानर्थक्यादिति । आत्मकृतविभागापेक्षया पितृकृतविशेषविभागे न न्यूनाधिकविभक्तानामिति वचनानर्थक्यादित्यर्थः । तथाच तद्वचनञ्च सोद्धारानुद्धाररूपन्यूनाधिकभागबोधकम् । किन्तु पितुरिच्छाकृतस्यैवास्य न्यूनाधिकविभागस्यैव बोधकमिति भावः । प्रयोजनान्तरप्रदर्शनेन वचनस्यार्थवत्त्वमाप्रकृते ।०॥

अथ विनाप्युद्धारं समांशतायाः पितृकृताया धर्म्यत्वार्थं वचनमुच्यते । तन्न । न्यूनत्वमेव तर्हि पितृकृतन्धर्म्यं स्यादित्यधिकपदमनर्थकं स्यात् ।

किञ्च । उद्धाराभिप्रायेण समन्यूनाधिकत्ववर्णने इच्छया विभजेदित्यनर्थकमिदम् । एतदितरपदत्रयेणैव वक्तव्यस्याभिहितत्वात् । अस्मन्मते तु इच्छया विभजेदिति स्वोपात्तधनविषयम् । श्रेष्ठांशतासमानांशतयोस्तु पैतामहधनगोचरत्वमिति न किमप्यनर्थकम् ॥ ० ॥

अर्थेति । धर्म्यत्वार्थमिति । तद्वचनस्य धर्म्यत्वप्रतिपादनादितिभावः । न्यूनत्वमेवेति । भ्रातृकृतशोद्धारापेक्षया पितृकृतसमभागस्यैव न्यूनत्वादिति भावः । अधिकपदमिति । सोद्धाररूपाधिकभागस्य भ्रातृकृतस्यापि धर्म्यत्वेन पितृकृतविषयेऽधिकपदोपादानवैयर्थ्यादितिभावः । चूडामणिस्तु । अधिकपदमिति । ज्येष्ठस्य विंशउद्धार इत्यनेन सामान्यतएवप्राप्तेरनर्थकमित्यर्थ इत्याह । अथ पितृकृतसमभागएव सोद्धारभागापेक्षया न्यूनः कनिष्ठानामर्थादधिकोभवतीति सएवैकोभागोन्यूनाधिकपदाभ्यामुच्यते न पृथगिति नाधिकपदवैयर्थ्यमतआह । किञ्चेति । वस्तुतोननु समभागमात्राभिधानेन पितृकृतत्वनिमित्तविशेषाभिधानेन सामान्यप्राप्ताधिकांशबाधापत्तिरतोऽधिकपदं सोद्धारभागप्रापकतया सार्थकं वाच्यम् । तथा सति ज्येष्ठं वा श्रेष्ठभागेनेत्युक्तयाज्ञवल्क्यवचनान्तरं

वयं न्यूनाधिकवचनेनैव तदुक्तद्विविधभागावगतेरेतोवचनमेतद्विषयान्तराभिप्रायकतया सार्थकयति। किञ्चेति। अनर्थकमिति। भागद्वैविध्यभाषाभिधानेन तवेच्छाया अप्रयोजकत्वादिति भावः। एतदितरेति। पदं वचनचतुर्थांशः। एतदितरपदत्रयेणैवेति। विभागश्चेत्पिता कुर्य्यादिति ज्येष्ठं वाश्रेष्ठभागेनेत्यादिपादत्रयेण। वक्तव्यस्य भागद्वयरूपस्य। कथं तर्हि वचनस्यार्थवत्त्वमत आह। अस्मदिति। स्वोपात्तविषयमिति। पितामहधनपरत्वे वैयर्थ्यापातादिति भावः। नकिमपीति। न्यूनाधिकवचनस्य स्वोपात्तविषयतया विभागश्चेदित्यस्य च पितामहधनगोचरतया वचनयोरर्थवत्त्वादितिभावः। इदञ्च न समीचीनमुक्तं इच्छया विभजेदित्यस्य स्वार्जितविषयत्वेनैव तत्र न्यूनाधिकविभागे सिद्धे न्यूनाधिकवचनवैयर्थ्यतादवस्थ्यात्। धर्मत्वार्थे तत्सार्थक्यं तु पितामहादिधनसामान्यविषयत्वपक्षेपि समानमितिभाव्यम् ॥ ० ॥

किञ्च। पितर्यपरतेऽपि द्विप्रकारोविभागोवृहस्पतिनोक्तः।

यथा। द्विप्रकारोविभागस्तु दायादानां प्रकीर्त्तितः। वयोज्येष्ठक्रमेणैकः समापरांशकल्पना। ज्येष्ठक्रमेणोद्धारन्दर्शयति। तथा समांशता

परेति । भ्रातॄणामपि परस्परविभागस्य द्विप्रकारत्वात् पितृकृतस्य विशेषेण स्यात् ।

तथा नारदः। पितैव वा स्वयम्पुत्रान् विभजेद्वयसि स्थितः। ज्येष्ठं वा श्रेष्ठभागेन यथा वास्य मतिर्भवेत्। ज्येष्ठस्य श्रेष्ठभागमभिधाय पुनर्यथा वास्य मतिर्भवेदित्यनेन यादृशी न्यूनाधिकविभागे पितुः पूर्व्वोक्तकारणात्कर्त्तव्यमतिर्भवेदिति पृथगभिधानात् श्रेष्ठभागादन्य एवायं न्यूनाधिकविभागः प्रतीयते। यत्पुनर्नारदवचनम्। व्याधितः कुपितश्चैव विषयासक्तचेतनः। अयथाशास्त्रकारी च न विभागे पिता प्रभुरिति। तद्व्याधिना आकुलचित्ततया कस्मिंश्चित्पुत्रे क्रोधाद्वा सुभगापुत्रस्नेहाद्वा अयथाशास्त्रं विभजति तद्विषयम्। पूर्वोक्तकारणात्तु शास्त्रीय एव विषमविभागः ॥ ० ॥

तन्निच्छया विभजेदिति स्वयार्ज्जितविषयकमेव वाच्यं स्वल्पेन वा विभज्य भूयिष्ठमादाय वा वसेदित्येकमूलकत्वात्तत्कथमनर्थकमतआह। किञ्चेति। विशेषेण स्यादिति। तथाच वचनवैयर्थ्यतादवस्थ्यान्न तथार्थसम्भव इति भावः पञ्चपञ्चन्दोषउच्यतइत्यादिना प्रागेवोक्तत्वात्तथापि तत्र दायं

प्रतिपादनार्थं पुनरभिधानमिति बोध्यम् ननु न्यूनाधिक वचनस्य सोद्धारानुद्धारभागद्वयनियामकत्वे पिता येषा मिति प्रतीकं व्यर्थं स्यात् । भ्रातृविभागेपि द्वैविध्यसत्त्वात् । यतोन्यूनाधिकविभागः सोद्धारानुद्धाराभ्यामन्यत्र वेत्यत्र प्रमाणान्तरमप्याह । तथेति । याहृशेति । एतस्य समांश मात्राभिधायकत्वे विभजेद्वयसि स्थितइति पूर्व्वप्रतीकेनैव समं स्यादश्रुतत्वात् विशेषस्येति न्यायात्समांशप्राप्त्या वैयर्थ्यं स्यादितिभावः । आकुलचित्ततया कर्त्तव्याकर्त्तव्यविवेचनशून्य तया पूर्व्वोक्तकारणाद्भक्तत्वरूपोष्यत्वादेः कारणादिति यदुक्तन्तत्र प्रमाणमाह ॥ ० ॥

यथा कात्यायनः । जीवद्विभागे तु पिता नैकं पुत्रं विशेषयेत् । निर्भाजयन्न चैवैकमकस्मात्कारणं विना । नैकमधिकदानेन विशेषयेत् । नच निर्भाजयेद्विभागशून्यन्न कुर्य्यात् कारणं विना उद्धारादिविशेषोहि बहूनामेव नैकस्य एकस्यापि चपुत्रस्य कारणं विना विशेषेण कार्य्यः । कारणवशात्तु कार्य्य एव एकस्यापीत्यवगतेर्नोद्धारापेक्षो विशेषः । किन्तु पितुरिच्छाकृतएवेति यथोक्त एवार्थः । यदि पुनः पितरि जीवति पुत्राएव विभा

समर्थयन्ते तदा विषमविभागः पित्रा न दातव्यः ।

तदाह मनुः । भ्रातृणामविभक्तानां यद्युत्था नम्भवेत्सह । न तत्र भागं विषमम्पिता दद्यात्कथ ञ्चन ॥ ० ॥

यद्येति । कारणं विना पूर्व्वोक्तकारणं विना अन्यस्यासम्भ वात् । नैकं पुत्रं विशेषयेदित्यन्वयः निर्भाजयेदित्यत्र कारणं विना पातित्यादिकं विना इत्यस्य गुणं विनेत्येवार्थः । तथाच कारणं गुणं विना न विशेषयेत् । नोद्धारादिना विशेषयेदिति वचनार्थः । तत्कथं पूर्व्वोक्तकारणत्वाविशेषं ब्रूषे इत्यत आह । उद्धारादिविशेषा होति । बहूनामेवेति । विंशतदर्द्धतत्तुरीय भागरूपानामुद्धाराणां बहुष्वेव उद्दिष्टत्वादितिभावः । नैकस्येति । तथाच एकस्य विशेषेनतु गणकृतोद्धाररूपः उद्धा रस्य सर्व्वपुत्रसाधारणतया एकपुत्रस्य विशेषत्वासम्भवात् । किन्तु । कारणान्तरकृतेऽन्यत्र एवेतिभावः । यद्यपि ज्येष्ठस्य सगुणत्वे इतरेषाञ्च निर्गुणत्वे एकस्याप्युद्धारकृतविशेषः सम्भवत्येव । तथापि । सविशेषेन वचनार्थः पितृपादानवैय र्थ्यात् । भ्रातृविभागेपि तथा विधविशेषसम्भवादितिबोध्यम् । ननु एकग्रहणात्कारणं विना बहूनां विशेषः स्यादित्याशं क्याह । एकस्यापीति । न्यायादव्यवहर्त्तव्यइति भावः ।

इच्छाकृतएवेति । स्वार्जितमात्रे पूर्व्वोक्तकारणसहकारेण इच्छाकृतएवेत्यर्थः । उत्थानं विभागोद्यमः उत्थानमर्जितं सहयुगपत् । तथाच सर्व्वेषामर्जितेन विषमविभागइतिकुल्लूकभट्टव्याख्यानन्तदसत् । तत्र विषमविभागाभावस्य समविभागस्य च न्यायतएव प्राप्तेर्व्वचनानर्थक्यात् ॥ ० ॥

उद्धारस्तु तदा पित्रा दातव्यएव। तस्य विषमविभागरूपत्वाभावात्। न्यूनाधिकविभागस्यैवनिषेधादिति पितृकृतोविभागः।

इदानीमुपरते पितरि भ्रातॄणां विभागः कथ्यते। सोपि च मातरि जीवन्त्यां सत्यपि पितृपरमातृधनस्वामित्वे धर्म्येण विभागः सोदराणां भवतीति कथ्यते। ऊर्द्ध्वं पितुश्च मातुश्चेति। उभयोरुपरमे सोदराणां पैतृकधनविभागस्य ज्ञापनात्। नपुनर्मातुरूर्द्ध्वं मातृधनविभागार्थमेतत्कपदात् पितृधनमात्रस्यैव विभागावगतेः पैतृकपदस्यैकशेषकल्पनायां प्रमाणाभावात्। किञ्च। जनन्यां संस्थितायामित्यनेनैव मातरि मृतायान्तदीयधनविभागस्य मनुना वक्ष्यमाणत्वादूर्द्ध्वं मातुरिति पुनरुक्तं स्यात्।

यथा याज्ञवल्क्यः। विभजेरन् सुताः पित्रोरू
र्द्ध्वमृक्थमृणं समम्। मातुर्दुहितरः शेषमृणा
त्ताभ्य ऋतेऽन्वयः ॥०॥

विषमविभागरूपत्वाभावादिति। एवं समुद्धृतोद्धारे
समानंशान्प्रकल्पयेदित्यादिना अविभक्तद्रव्यात्पृथक्कृतस्यो
द्धारतया तस्य भागाभावादितिभावः। इति पितृकृत
विभागः। पितृकृतविभागं निरूप्य भ्रातृकृतविभागनिरूपणार्थं
सावधानायप्रतिजानीते ॥ इदानीमिति ॥ पितृकृत
विभागनिरूपणानन्तरमित्यर्थः। सोपि भ्रातृकृतविभागोऽपि।
धर्म्येति। तथाच विभागः सिद्धत्वेऽपि किन्तु स धर्म्यमिति,भाव।
अतएवोक्तं सत्यपीत्यादिविभागाधिकारज्ञापनार्थम्।
नन्वेवम्पितृसत्त्वे इवमातृसत्त्वेऽपि विभागासिद्धेरपि वचनार्थ
स्यसम्भवे धर्म्यत्वेन किमित्यदृष्टकल्पनागौरवमङ्गीकरोषिइति
चेन्न। तवापितदानीं तेषान्धनस्वामित्वात् मातृसत्त्वे विभागा
भावस्य वाचनिकत्वेनादृष्टकल्पनायास्तुल्यत्वादिनिगमना तुते
षाम्पितृसत्त्वेऽस्वामित्वात्। युक्तविभागासिद्धिः मातृसत्त्वे
तु तेषां स्वधनस्वामित्वात् विभागे बाधकाभाव इति न्याय एवेति
विभाव्यं। ज्ञापनात्मनुनेतिशेषः। ननु मातुरूर्द्ध्वमित्यस्य पितृ
धनविषयत्वेऽदृष्टकल्पनागौरवमेव एकशेषकल्पनायां मान

नतथाद्वात्किञ्चेति। पुनरुक्तमिति। द्वयोरपि मनुवचनत्वादिति भावः। उक्तार्थे याज्ञवल्क्यवचनं स्फुटं प्रमाणयति यथेति ॥०॥

मातृधनविभागस्य दुहितॄणां सद्भावे अनधिकारः असद्भावे चान्वयपदेन पुत्राणामधिकार इति उत्तरार्द्धेनैव प्रतिपादनात् ( पूर्व्वार्द्धे पित्रोरिति पितृधनविषयमेव अन्यथा पुनरुक्तत्वापत्तिः। मातापित्रोरुपरमे भ्रातरोविभजेरन्निति वदता याज्ञवल्क्येन उभयोरुपरमानन्तरकालस्य विभागार्थतया विधानात् साहित्यं विवक्षितम् ॥ ० ॥

अनधिकार इति। पुत्राणामिति शेषः पुनरुक्तत्वेऽपि पूर्व्वार्द्ध पित्रोरित्यत्रैकशेषकल्पनया मातृधनविभागे मातुरूर्द्ध मितिप्राप्तेः पुनर्मातुर्धनमित्यस्य पुनरुक्तत्वापत्तेरित्यर्थः। इद मुपलक्षणम्। उत्तरार्द्धे दुहित्रभावे सुतस्याधिकारप्रतिपादनात् विरोधोपि द्रष्टव्यः। अथ पूर्व्वार्द्धं मातुरयौतकधन विषयमुत्तरार्द्धं यौतकधनविषयम्। अत्र प्रथमन्दुहित्र धिकारस्य वक्ष्यमाणत्वात्। अतोन पौनरुक्त्यं नवा विरोधइति चेन्न। अयौतकस्त्रीधने पुत्रकुमार्य्योर्युगपदधिकारस्यैव वक्ष्य माणत्वेन केवलपुत्राधिकारप्रतिपादने विरोधतादवस्थ्यात्।

अथ सुमादत्येकशेषकल्पनया कन्यापुत्रयोर्युगपदधिकार प्राप्तिरिति वाच्यम् । पितृधनसमभिव्याहारात्केवलपुत्रा धिकारस्यैवावगतेः अन्यथा पितृधने तयोर्युगपदधिकारा पत्तिः। साहित्यमिति । पितृमात्रुपरमयोः साहित्यमित्यर्थः विवक्षितमिति । तद्वचनस्य चकारेण द्वन्द्वसमासार्थकेन साहि त्यावगमादितिभावः । अत्र च साहित्यं विभागक्रियापेक्षया साहित्यन्तुतुल्यरूपाणां परस्परसापेक्षाणामेकक्रियान्वयित्व ञ्च तुल्यरूपाणां विशेष्यविशेषणभावोपपन्नानान्तेन सपत्नीको धर्ममाचरेदित्यत्र साहित्यव्युदासः पत्युर्विशेषणत्वेनैव पत्न्या आचारक्रियान्वयात्परस्परमापेक्षाणाम्परस्परमैरपेक्षेण तत्क्रि यान्वयिनां युगपत्तत्क्रियान्वयिनामितिफलितार्थः तेन धवखदिरौ च्छिनत्तीत्यत्र एकयामपिछिदा क्रियाव्यक्तौ क्रमेणान्वितयोर्धवखदिरयोः साहित्यव्युदासः युगपदन्वित योरेव साहित्यप्रतीतेरिति अत्र सम्वादन्दर्शयति॥ ०॥

तथाच शङ्खलिखितौ।रिक्थमूलं हि कुटुम्बमस्व तन्त्राः पितृमन्तोमातुरप्येवमवस्थितायाः। मातुरपि सकाशादस्वतन्त्राविभागानधिकारिणइत्याहतुः।

सुव्यक्तमाह व्यासः । भ्रातॄणां जीवतोः पित्रोः सहवासोविधीयते । तदभावे विभक्तानान्धर्म्म

स्तेषां विवर्द्धते । सहवासविधानमुखेन पृथग्भाव निषेधात् । पितृमातृजीवनवतश्च विभागनिषेधात् जीवतोरितिमाद्वित्यमविवक्षितम् । अतएकस्मिन्न पि जीवति विभागोन धर्म्मः । किन्तूभयोरभावे यथाह । वृहस्पतिः । पित्रोरभावे पुत्राणां विभागः सम्प्रदर्शितः । मातुर्निवृत्ते रजसि जीवतोरपि शस्यते । निवृत्तरजस्कायां मातरि जीवन्त्यां विभा गस्य मातृधनगोचरत्वानुपपत्तेः ॥ ० ॥

तथाचेति स्वस्येति । हि हेता यतस्तस्य मूलं गार्हस्थ्यं अतोऽस्य तस्याः व्ययानधिकारिणः इतरथा स्वेच्छया धनव्यये कृते धनविलयापत्त्या कुटुम्बरक्षा न स्यादिति भावः । अत्रैवं शब्देन मातुरवस्थाने अस्वातन्त्र्यस्य स्फुटमेवाभिधान मिति भावः । नचास्य वचनस्य भार्य्यापुत्रश्चेत्यनेन एकमूल त्वात् । स्वार्जितधने अस्वातन्त्र्यपरत्वमस्त्विति दायभागप्रकर णाम्नायात् । अतएव इदमस्पष्टमेव अतः स्पष्टमाह । व्यासइति । विधानमुखेन प्रतिपादनमुखेन । निषेधादिति । सहवासस्य जन्मप्रभृतिप्राप्ततया तद्विधानासम्भवात्पृथग्भा वेति । पृथग्भावनिषेधस्यैव सहवासएवेतिनियमेन परिसंख्यया वा वचनार्थत्वादितिभावः । अत्र जीवतोरिति द्विवचनावगत

साहित्यस्य विवक्षितत्वे एकमात्रजीवनेन सहवासस्य प्राप्त्या मातरि जीवन्त्यामपि विभागः स्यात् मातरि मृतायाम्पितरि सत्वेपि विभागश्चापद्येत। अतस्तदविवक्षामाह। पित्रेत्यादिना। जीवनवतद्वयमेनाविवक्षितत्वे उद्देश्यविशेषणत्वमपि साहित्यस्य प्रतिपादितंजीवत्पि इमाइ कमुद्दिश्य विभागाभावस्य विधेयत्वात्। यद्यपि पितृसत्वे स्वामित्वेनैव विभागाप्राप्तेः पित्रुपादानवैयर्थ्यं तथापि दृष्टान्तार्थतदुपादानमतएव प्रागुक्तमातुरप्येव मवस्थिताया इत्य त्रएवं शब्दः यथा पितरि जीवति विभागा स्वातन्त्र्यं तथा मातरि जीवन्त्यामपीति दृष्टान्तार्थकः प्रयुक्त इति। उभयोरभावे अन्यतराभावे। एवञ्च जीवतोः साहित्या विवक्षायामुपरमसाहित्यं स्फुटमुक्तमितिभावः। मातृधनगो चरत्वानुपपत्तेरित्यस्य मातुर्निर्धनत्वापत्तेरितिशेषः॥०॥

उभयाभावोक्तविभागस्यैव जीवतोरपीत्यपि कारेण निर्द्दिष्टस्य शस्तत्वकीर्त्तनात्। उभयोरभावे भ्रातृविभागः पितृधनगोचरएवावधार्य्यते। अत एव जीवन्त्याम्मातरि मातृप्रधानकं विभागं निर्द्दिशति व्यासः॥समानजातिसङ्ख्याये जातास्त्वेकेन सूनवः। विभिन्नमातृकास्तेषां मातृभागः प्रशस्यते। तथा बृहस्पतिः॥यद्येकजातावहवः समानाजाति

सङ्ख्यया। सापत्नास्तैर्विभक्तव्यं मातृभागेन धर्म्मतः पुत्राणां जातिसङ्ख्यासाम्येन विभागे विशेषाभावान्मातुरेवायं विभागोन पुत्राणामित्युद्दिश्य विभागः कर्त्तव्यः तेनेतरमातृधनद्वात्रापि पुत्राणां मातरि जीवन्त्यां न परस्परविभागे स्वातन्त्र्यम्। किन्तु मातुरनुमत्यैव परं विभागोधर्म्यः। अतोयद्गौतमादिभिरुक्तम्। विभागेतु धर्म्मवृद्धिरित्यादि तन्मातुरुपरमे वेदितव्यम् तत्र यद्यविभक्ताएव स्थातुमिच्छन्ति तदा ज्येष्ठएव योगक्षेमशक्तः सर्व्वं गृह्णीयात्। इतरे पितरमिव तमुपजीवेयुः।

यथा मनुः। ज्येष्ठएव तु गृह्णीयात् पित्र्यन्धनमशेषतः। शेषास्तमुपजीवेयुर्यथैव पितरन्तथा।

तथा गौतमः। सर्व्वं वापूर्व्वजस्येतरान् विभृयात् पितृवत्। वाशब्दात्पृथग्वा भवेयुः सह वावसेयुः। सहवासश्च सर्व्वेषामिच्छातएव।

यथा नारदः। विभृयाद्वेच्छतः सर्व्वान् ज्येष्ठो भ्राता यथा पिता। भ्राता शक्तः कनिष्ठोवा शक्त्यपेक्षा कुले स्थितिः। शक्तः सन् कनिष्ठोपि सर्व्वान्

विभृयात् । मध्यमोत्र दण्डापूपन्यायात्सिद्धः । विभागस्त्वेकस्यापीच्छया भवतीत्युक्तं प्राक् ॥ ० ॥

उभयाभावोक्तेति । उपस्थितविभागानुषङ्गेनैव प्रस्तुतान्वय सम्भवे विभागान्तराध्याहारकल्पनायां गौरवादिति भावः । पितृधनगोचरएवेति पितामहधनस्यापि पितुः स्वत्वत्त्वात्पितृ धनत्वेन तस्यापि संग्रहः । पितृधनविभागप्रकरणे एवकारेण मातृधनमात्रव्यवच्छेदः तेनास्य वचनस्य न प्रागुक्तपिता महधनेगोचरत्वविरोधः । मातृप्रधानकं मातृसम्बन्धित्वेन निर्द्देशपूर्व्वकं तत्रापि पितृधने स्वस्वत्वास्पदीभूतेपीत्यर्थः । उक्तं प्रागिति । पितृधनविभागप्रकरणे एकस्यापि स्वधने स्वाम्यादित्यादिनेत्यर्थः ॥ ० ॥

अतएव विभागं प्रक्रम्याह कात्यायनः । अप्राप्त व्यवहाराणां धनं व्ययविवर्जितम् । न्यसेयुर्व्वन्धुमि त्रेषु प्रोषितानान्तथैव च ।

तथा रक्ष्यं वालधनमाव्यवहारप्राप्तेरिति वचनम् । अयञ्च पुत्राणां विभागः पुत्रपौत्रप्रपौत्र पर्य्यन्तः समानोनात्रोत्पत्तितः प्रत्यासत्तिक्रमे णाधिकारक्रमः । पुत्रादीनान्त्रयाणामेव पार्व्वणे

तत्पिण्डसम्भोग्यपिण्डद्वयविधानात् । अतएव देवलः । पिता पितामहश्चैव तथैव प्रपितामहः। उपासते सुतं जातं शकुन्ताइव पिप्पलम् । मधुमांसैश्च शाकैश्च पयसा पायसेन च। एष नो दास्यति श्राद्धं वर्षासु च मघासु च।

तथा शङ्खलिखितयमाः। पिता पितामहश्चैव तथैव प्रपितामहः जातं पुत्रं प्रशंसन्ति पिप्पलं शकुनाइव। मधुमांसेन खड्गेन पयसा पायसेन वा। एष दास्यति नस्तृप्तिं वर्षासु च मघासु च। प्रपितामहग्रहणात् पुत्रपदम्प्रपौत्रपर्य्यन्तपरम् । तदनेन प्रपौत्रपर्य्यन्तस्य श्राद्धदानेन प्रपितामहपर्य्यन्तोपकारत्वात् प्रपौत्रपर्य्यन्तस्य तुल्योदायाधिकारः । अतएव जीवत्पितृकयोः पौत्रप्रपौत्रयोरनधिकारः। पार्व्वणानधिकारितया पिण्डाप्रदातृत्वात् । पित्रोरुपरमे च भ्रातृणाम्पितृकृतोविशेषःपरं निवर्त्तते। अन्यत्सर्व्वमेव प्रत्येतव्यम् ॥ ० ॥

अप्राप्तव्यवहाराबालकाः पञ्चदशवर्षादनधिकवयस्काः। प्रोषितानामिति । अत्र तदनुमतिं विना विभागः स्फुटएवेति भावः । अतएव प्रपौत्रपर्य्यन्तानान्तुल्योपकारकता अत

एव प्रपितामहपर्य्यन्तानान्तु स्वोपासनेत्याह । अत एवेति । तृप्तिं दास्यति जनयिष्यति । प्रपौत्रपर्य्यन्तपरमिति । पार्व्वणकर्त्तृ सपिण्डत्वेन लक्षणयेत्यर्थः । अत एव धनाधिकारस्योपकारि निबन्धनत्वादेव । पितृभागस्यैवोत्तरकालन्तद्गामित्वान्न निरंशतेति बोध्यम् । पिण्डाप्रदातृत्वादिति । अत्र पिण्डदानयोग्यतैव विवक्षिता नतु तदुपधानम् । तथात्वे दैवादकृतपार्व्वणस्य पुत्रादेरनधिकारापत्तेः । स्वरूपयोग्यता तु पौत्रादेर्म्मृतपितृकपौत्रत्वादिनैवेति । तथैवाविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनमित्यादि शास्त्रेणावगमात् । तेन जीवत्पितृकपौत्रादेर्न स्वरूपयोग्यतेति बोध्यम् ॥ ० ॥

। यदा चैकः पुत्रोस्ति अपरस्य पुत्रस्य पुत्राः सन्ति तदा तस्यैको भागो अपरस्य बहूनां नप्तॄणां स्वपित्रधीनजन्ममूलत्वाद्धनसम्बन्धस्य यावत्येव धने तस्य स्वामित्वार्हत्वन्तावत्येव तेषामपि यच्चानेकपितृकाणां तु पितृतो भागकल्पनेति वचनन्तस्य नायं विषयः । पितृव्यपितुरेव तत्सर्व्वन्धनमिति पितृव्यस्यैव सर्व्वं स्यात् । नतु तद्भ्रातुः पुत्राणाम् । पितृतो भागकल्पनात् पितापुत्रविभागवद्भागकल्पने पितुर्भागद्वयसम्बन्धात्पितृव्यस्य भागद्वयम्भवेत

**तद्भ्रातुः पुत्राणां त्वेकैकोभागः स्यात्तदा च शिष्टाचारविरोधः स्यात् । अस्य पुनरेष विषयोयत्रैकस्य भ्रातुरल्पसङ्ख्यकाः पुत्राः सन्ति अपरस्य बहुसङ्ख्यकास्तत्र पितृतोभागकल्पनेति ॥ ० ॥**

उपकाराविशेषाद्बहूनां मृतपितृकपौत्राणां प्रत्येकमपि तुल्यभागमाशङ्क्याह । यदीति । तावत्येवेति । तथा च रत्नाकरे कात्यायनः । अविभक्ते मृते पुत्रे तत्सुतं रिक्थभागिनम् । कुर्वीत जीवनं येन लब्धं नैव पितामहात् । लभेतांशं स पित्र्यन्तु पितृव्यात्तस्य वा सुतात् । स एवांशस्तु सर्व्वेषां भ्रातृणां न्यायतोभवेत् । लभेत तत्सुतोवापि निवृत्तिः परतोभवेदिति । अत्र न्यायतइत्यस्य स्वपित्रधीनजन्ममूलत्वादित्यर्थः । अत एव पार्व्वणपिण्डदातृत्वेऽपि दौहित्रस्य नाधिकारः मातुलादिमत्त्वे तन्मातुरेवानधिकारात् । प्रपौत्रपुत्रस्य तु पार्व्वणपिण्डदातृत्वाभावान्नाधिकारः अत्रैव विषये यत्केनचिदिदं वचनं साधकतया उपन्यस्तं तद्दूषयितुमेतद्वचनमाह । यत्रेति । अनेकपितृकाणामिति । अनेके पितरोयेषामिति व्युत्पत्तेरनेकभ्रातृणामनेके पुत्राः सूचिताः । अयमपितृव्यभ्रातुः पुत्रविभागे पितृतोभागकल्पनेत्यस्य किम्पित्रंशएव पुत्रस्य भागइत्यर्थः पितापुत्रवद्भागोज्ञार्थः । तत्र नायइत्याह । पितृव्यपितुरेवेति ।

द्वितीयमाशङ्क्य निषेधयति । पितृतइति । स्वमतमाह । चस्य पुनरिति । यद्वेति । तथाच विभिन्नपितृकाणां पौत्राणां पितामहधनविभागे स्वपित्रनुसारेण भागकल्पनेति वचनार्थ इतिभावः । पुत्रादत्युपलक्षणम् । पौत्रा अपि बोध्याः ॥०॥

इदानीं सवर्णभ्रातॄणां विभागोविंशोद्धारादिपूर्व्वकोवा समएव वेति विकल्पः । उद्धारमन्तरेणापि समविभागमाह पितरीत्यनुवृत्तौ ।

हारीतः समानतोमृते रिक्थविभागः ।

तथोशना । वर्णानामानुलोम्यानां विभागो यः प्रदर्शितः । समत्वेनैकजातानां विभागस्तु विधीयते ।

तथाच पैठीनसिः पैतृके विभज्यमाने दायाद्ये समोविभागः ।

तथा याज्ञवल्क्यः । विभजेरन्सुताः पित्रोरूर्द्ध्वं रिक्थमृणं समम् । अतः सोद्धारानुद्धारयोर्विकल्पः । नच केवलसमप्रविभागस्यापि शास्त्रीयत्वान्नित्यवत्तस्यैवानुष्ठानं स्यादितिवाच्यम् । भक्त्यतिशयेन भ्रातॄणामुद्धारानुमतेरपि सम्भवाद्विभागाविभागवद्विकल्पःअतएवाद्यतनानां भक्त्यतिशयाभावात्समभागएव लोके दृश्यते । उद्धारार्हज्येष्ठाभावाच्च ॥०॥

इदानीं कालविशेषतोभ्रातृविभागनिरूपणानन्तरं। विकल्पोदिप्रकारोनिरूप्यतइतिशेषः। तत्र सोद्धारः ज्येष्ठस्य विंशोद्धारइत्यादिना प्रागेवोक्तः। सम्प्रति समं साधयति। उद्धारमन्तरेणापीति। समानतः समत्वेन तृतीया विशेषणे। आनुलोम्यानां अनुलोमजातानां ब्राह्मणादेः क्षत्रियादि पुत्राणामित्यर्थः। एकजातानामेकजातीयमातृजातानामित्यर्थः। दायादस्येदन्दायाद्यन्तस्मिन् दायाद्ये विभागोंशः समइत्यर्थः। विभागोविभाज्यमानदायः समानइतिवार्थः। अतः विभागद्वैविध्यतः। विकल्पोव्यवस्थितः नलैच्छिकः विषम शिष्टत्वात्। व्यवस्थितत्वं व्यवस्थापयितुमाशङ्कते। नचेति। नित्यवदिति नियतमित्यर्थः। समभागस्याऽपि शास्त्रीयत्वे सोद्धारे बलवद्द्वेषादितिभावः। अग्रतनानामिति। कनिष्ठानामिति शेषः यच्च चाद्यगर्भसम्भवरूपज्येष्ठाभावस्तत्रापि समो विभागइत्यवधेयं। ननु जन्मविद्यागुणज्येष्ठइत्यनेन गुणस्यैवाधिक्यांशप्रयोजकत्वमुक्तन्नु भवतिशयस्यापि प्रमाणाभावादत आह। उद्धारार्हइति। वेदविद्यावैदिककर्मानुष्ठानकनिष्ठा वस्थानादिगुणवतएव उद्धारार्हतया कलौ तादृशज्येष्ठस्य प्रायेणासत्त्वादितिभावः। तेन विकल्पोऽपि गुणतदभावाभ्यां व्यवस्थितएवेति द्रष्टव्यं ॥ ० ॥

यस्तु स्वयोग्यतामात्रपरामर्षात् पितृपितामहा दिधनविभागे निस्पृहः स किञ्चिदेव तण्डुलप्रस्थमपि दत्वा तत्पुत्रादेः कालान्तरीयदुरन्ततानिराशार्थं विभजनीयः ।

यदाह मनुः ॥ भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा । स निर्भाज्यः स्वकादंशात् किञ्चिद्दत्वोपजीवनम् ।

तथा याज्ञवल्क्यः । शक्तस्यानीहमानस्य किञ्चिद्दत्वा पृथक्क्रिया । पितरि चोपरते सोदरभ्रातृभिर्विभागे क्रियमाणे मात्रे पुत्रसमांशो दातव्यः। समांसहारिणी मातेति वचनान्मातृपदस्य जननीपरत्वान्न सपत्नीमातृपरत्वमपि । सकृच्छ्रुतस्य मुख्यगौणत्वानुपपत्तेः । समांशताच मातुर्भर्त्रादिभिः स्त्रीधनादाने दत्ते पुनरर्द्धं पित्रा च पुत्रेभ्यः समविभागदाने सर्व्वपत्नीनामेव पुत्रसमांशता कर्त्तव्या ॥ ० ॥

स्वयोग्यतामात्रपरामर्षात् । स्वयोग्यताबलात् । किञ्चिदिति । किञ्चिद्दत्वा निवृत्तिस्तस्यान्यत्रोपेचाव्यञ्जिका इत्यतस्तदुपादानम् । भ्रातॄणामिति । भ्रातॄणां विभागे क्रियमाणे

यस्तु अनः स्वकर्मणा प्रकस्तेत्पितृधनं नेहेत न चेष्टत इत्यर्थः। एवमेव मिताचराकृच्छूलपाणिहलायुधप्रभृतयः। प्रका प्रकारादयस्तु भागिषु व्याप्रियमाणेषु आलस्यादिना योनव्याप्रियते सनिर्भाज्यः मूलधनादंशमात्रन्दत्वा अर्जितधनभागशून्यः कार्य्यइति वचनं व्याचकुः। तदसत् एतस्योपघातार्जितविषयत्वसाधनोपघातिनार्जिते निर्व्यापारस्यापि साधारणं समाश्रित्येत्यादिना भागावगतेर्विरोधात्। अनुपघातार्जितविषयत्वे तु अनुपपन्नन् पितृद्रव्यमिति तदीयपरवचनवैयर्थ्यापातादिति। सोदरभ्रातृभिरिति। सोदरासोदरविभागे तु नैवन्त्वैकस्याः सर्व्वपुत्रमातृत्वाभावात्। मातुरेवांशितायावचनेन बोधितत्वात् न सपत्नीमातुरिति। सकृच्छ्रुतस्येति। युगपद्वृत्तिद्वयविरोधादिति भावः। इदञ्च प्राचीननयमाश्रित्याभिहितन्न तु नव्यानाम्। किन्तु। नव्यैरपि तात्पर्य्यान्यथानुपपत्त्यैव गङ्गायां घोषमत्स्यौ स्त इत्यादौ वृत्तिद्वयाङ्गीकारात्। प्रकृते तथाविधोभयतात्पर्य्यग्राहकप्रमाणाभावेन मुख्यपरतेति। तन्मताश्रयणेपि न वृत्तिद्वयसम्भवइति भावः। अतएव पितृपत्नीत्वेनोभयसाधारणरूपेण लक्षणयैवोभयबोधसम्भवइत्यपि परास्तम्। लक्षणाहेतुत्वाभावात्सर्व्वपत्नीनामिति। पुत्रहीनानामिति वक्ष्यते॥०॥

तदाह याज्ञवल्क्यः । यदि कुर्य्यात्समानंशान् पत्न्यः कार्य्याः समांशिकाः । न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा । अधिविन्नस्त्रियै देयमाधिवेदनिकं समं । न दत्तं स्त्रीधनं यासान्दत्तेत्वर्द्धं प्रकल्पयेत् । पुत्त्रहीनाश्च पितुः पत्न्यः समानंशानपुत्त्रवत्यः ।

तथा व्यासः । असुतास्तु पितुः पत्न्यः समानंशाः प्रकीर्त्तिताः । पितामह्यश्च सर्व्वास्ता मातृतुल्याः प्रकीर्त्तिताः ।

तथा विष्णुः । मातरः पुत्त्रभागानुसारभागहारिण्यः अनूढादुहितरश्च । पुत्त्रभागानुसारेण यथा वर्णक्रमेण पुत्त्राणाञ्च चतुस्त्रिद्व्येकभागिता तथा पत्नीनामपीति ॥ ० ॥

पुत्रेभ्यइत्यत्र दत्ते पुनरर्द्धमित्यत्र च प्रमाणं क्रमेण वचनद्वयमाह । तदाहेति । समानंशान् पुत्रानिति शेषः । अधिविन्नेति । अधिउह्यमानस्त्रियमपेक्ष्याधिकाविन्नापूर्व्वोढाहिता या तस्यै स्त्रियै इत्यर्थः । आधिवेदनिके अधिवेदनानिमित्तं समुह्यमानस्त्रियै देयमित्यर्थः । यद्यपीदमधिविन्नस्त्रीसम्प्रदानकदानविषयम् दत्तं स्त्रीधनं यासामितितु पितृकृतविभागविषयम् । तथाप्येकत्र निर्णीतः शास्त्रार्थोबाधकं

विना अन्यत्रापि तथैतिन्यायात् । अत्रापि तथाकल्प्यतइति । तथोक्तं । पुत्रहीनाश्चेति । अत्र कश्चिदिदम्पितुः पत्न्यइति स्वरसात् । पुत्रकृतविभागविषयम्पितृकृतविभागे तु । सपुत्रापुत्र पत्नीनामेवांशित्वमित्याह । तदसत् । मातृपदस्य न सपत्नीमातृपरत्वमितिव्याख्यानविरोधात् । भर्तृकृतविभागे पुत्रवती पत्नीनामप्यंशित्वे । समांशहारिणी माता पुत्राणां स्यान्मृते पताविल्यत्र माता तु पितरि प्रेते पुत्रतुल्यांशहारिणीत्यत्र च मृते पताविति । पितरि प्रेते इतिविशेषणवैयर्थ्याच्च । नच पतिसत्त्वे तत्समांशहारिणी तदभावे पुत्रसमांशिनीत्यर्था वाच्यइति वाच्यम् । यदि कुर्य्यात्समानांशानित्यत्र उपस्थित पुत्रसमांशतायाएव पत्नीनाम्प्राप्तेः । नत्वनुपस्थितपतिसमांश तायाइति । तस्मात्पितृकृतविभागे पुत्रहीनपत्नीनामेवांशित्वं नपुत्रवतीनां पुत्रकृतविभागेतु मातॄणामितिस्थितिः । पितुरितिकर्त्तरि षष्ठी । पितामह्यइति पितामहधनविषयं अत्र पितामहीपदम्पितृजननीमात्रपरत्वागुरुयुक्तेरिति केचित् अपरेतु बहुवचनात्सर्वइत्युपादानात् । सर्व्वासामेव पितामहपत्नीनामंशित्वमिति प्राहुः ॥०॥

अनूढानां दुहितॄणां पुत्रभागमनुहृत्य तच्चतुर्थांशस्तदाह ।

बृहस्पतिः। समांशा मातरस्तेषां तुरीयांशाश्च कन्यकाः। पुत्रस्य भागत्रयम्। कन्यकाया एको भागः यदाह।

कात्यायनः। कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते। पुत्राणाञ्च त्रयो भागाः साम्यं स्वल्पधने स्मृतम्। अल्पधने पुत्रैः स्वात्स्वादंशाद्दाक्षिण्य कन्याभ्यश्चतुर्थांशो दातव्यः।

यथा मनुः। स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्। स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः। प्रदद्युरिति प्रदानश्रुतेरदाने च पतितत्वश्रुतेर्न कन्याभिरधिकारिबुद्ध्या ग्रहीतव्यम् न ह्यधिकारिणे भ्रात्रेऽपरो भ्राता स्वादंशाद्ददाति।

यथा याज्ञवल्क्यः। असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः। भगिन्यश्च निजादंशाद्दत्त्वांशन्तु तुरीयकम्। भगिनीनां संस्कार्य्यतामात्र नाधिकारितां एवञ्च बहुतरधने विवाहोचित धनं दातव्यम् न चतुर्थांशनियम इति सिद्ध्यति। एतच्च कन्यापुत्रयोः समसङ्ख्यत्वे ज्ञातव्यम्। विषमसङ्ख्यत्वे च कन्याया एव बहुतरधनं वा स्यात्। पुत्रस्य वा निर्धनता स्यात्। न चैतदुचितम्। पुत्रस्य

प्राधान्यात्। यच्चेदमत्र बाधकमुक्तम्। अविद्यमाने पित्रर्थे स्वांशाद्दुत्य वा पुनः। अवश्यकार्य्याः संस्काराभ्रातृभिः पूर्व्वसंस्कृतैः ॥ ० ॥

स्वल्पधने इति। यद्धनस्य एकपुत्रलभ्यतुरीयांशेन कन्यासंस्कारोन सम्भवति तदैव स्वल्पधनं तद्भ्रातृभिरेव विभजनीयम्। पश्चात्तैरेव स्वस्वद्रव्यादाकृष्य भगिनीसंस्कारः कार्य्य इति भावः। न चतुर्थांशनियमइति। अतएव रत्नाकरे विष्णुः अनूढानां कन्यानां वित्तानुसारेण संस्कारं कुर्य्यादिति। विषमेति। पुत्राणां चतुरादिसङ्ख्ये कन्यायाश्चैकत्वे कन्याया बहुतरधनं चतसृषु कन्यासु सतीषु पुत्रस्यैकस्य निर्द्धनतेत्यर्थः ॥ ० ॥

अस्मान्नारदवचनादवश्यकर्त्तव्यत्वाद्भगिनीनां संस्कारस्य निरंशताऽपि न दोषायेति। तदयुक्तम्। भ्रातृसंस्कारार्थत्वादस्य वचनस्य। भ्रातॄणां पूर्व्वसंस्कृतैरिति पाठस्य नाकरत्वाद्भ्रातृसंस्कारस्य प्रक्रान्तत्वादिदं हि पूर्व्वमुक्तम्। येषान्तु न कृताः पित्रा संस्कारविधयः क्रमात्। कर्त्तव्याभ्रातृभिस्तेषाम्पैतृकादेव तद्धनात्। येषान्तेषामिति पुंलिङ्गनिर्द्देशा

देतदनन्तरमेवाविद्यमानइति वचनारम्भात्भ्रातृ संस्कारार्थमेवेदं वचनमिति पितृपितामहादिधन विभागः।

अथ स्त्रीधनविभागार्थं प्रथमं स्त्रीधनंनिरूप्यते। तत्र विष्णुः। पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम्। आधिवेदनिकम्बन्धुदत्तं शुल्कान्वाधेयकमितिस्त्रीधनम्। अन्वाधेयमाह।

कात्यायनः। विवाहात्परतोयत्तु लब्धम्भर्तृकुलात् स्त्रिया। अन्वाधेयन्तदुक्तम् लब्धम्बन्धुकुलात्तथा। ऊर्द्धं लब्धन्तु यत्किञ्चित्संस्कारात्प्रीतितः स्त्रिया। भर्त्तुः पित्रोः सकाशाद्वा अन्वाधेयन्तु तद्भृगुः। बन्धुपदेन मातापित्रोरुपादानं। तेनायमर्थः॥०॥

भ्रातृणामिति पाठे एकशेषाद्भगिनीसंस्कारस्याप्यावश्यकता स्यात्। अतस्तन्निरस्यति। भ्रातृणामिति। ननु भ्रातृसंस्कारार्थत्ववद्भगिनीसंस्कारार्थत्वमपि वचनस्य कुतोनस्यादिशेषाश्रवणादतआह। भ्रातृसंस्कारस्येति। पुंलिङ्गनिर्द्देशादिति। न चशेषामपत्यानामिति नपुंसकनिर्द्देशएव कुतोनस्यादिति वाच्यम्। अर्थसाधुत्वे सम्भवति शब्दसाधुत्वमाचस्यान्याय्यत्वादित्यभिप्रायादिति। यस्तु तस्तु। पितृपितामहा

भावे भगिनीदानाधिकारितया भ्रातुरप्यावश्यकएव भगनी संस्कारः । अथ ऋतुमती भवति दाता प्रतिग्रहीता च नर कमाप्नोतीति श्रुतेः । अत एव याज्ञवल्क्येनापि । भगिन्यश्च निजादंशादित्यनेन भगिनीनामपि भ्रातृवत्संस्कार्य्यत्वमुक्तमि त्यतोवहुतरभ्रातृसंस्कारात् भ्रातुर्निर्द्धनतावत् । भगिनी संस्कारादपि निर्द्धनता नदोषायेति सुधीभिर्भाव्यम्। प्रकर णान्तरमाह ॥ अथेति ॥ अध्यग्न्यादिकमथे वक्ष्यते । विवा हात्परतइति । एतेन पितृमातृभ्रातृबन्धुदत्तमितिकाला न्तरदत्तमात्रपरिग्रहार्थमिति सुव्यक्तम् । बन्धुपदेनेति । लब्धंबन्धुकुलात्तथेत्यत्रेति शेषः ॥ ० ॥

मातापितृद्वारेण सम्बन्धिनाम्पित्रोश्च सकाशाद्य त्तु विवाहात्परतोलब्धम् । तथा भर्त्तुः सकाशाद्भर्त्तृ कुलाच्च श्वशुरादितोयल्लब्धं धनं तदन्वाधेयम् । विष्णुवचने च बन्धुपदं मातुलाद्यभिप्रायम् । पित्रा दीनां स्वपदेनैव निर्दिष्टत्वात् । परिणयनसमय लब्धस्य च ब्राह्माद्यासुरादिविशेषेण भर्त्तुः पित्रोर्वा धिकारात् ।

स्त्रीधनमाहतुर्मनुकात्यायनौ । अध्यग्न्यध्या वाहनिकन्दत्तञ्च प्रीतितः स्त्रियै । भ्रातृमातृपितृ प्राप्तं षड्विधं स्त्रीधनं स्मृतम् ।

तथा नारदः। अध्यग्न्यध्यावाहनिकम्भर्तृदाय स्तथैव च। भ्रातृदत्तम्पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम् ॥०॥

मातापितृद्वारेणेति। मातुः पितुर्व्वा यस्य सम्बन्धस्य घटकत्वन्तत्सम्बन्धवतां मातुलपितृव्यादीनामित्यर्थः। एवञ्च सति मातृपितृभर्तृदत्तस्य अन्वाधेयकसंज्ञा न स्यादतऊर्द्ध लब्ध मित्यभिहितम्। तत्र भ्रार्थमाह। पित्रोः सकाशादिति। तथा भर्त्तुः सकाशादिति च। लब्धभर्तृकुलादित्युक्तस्यार्थमाह। भर्त्तृकुलाच्चेति। इत्थं च विष्णुवचनोपात्तस्य सुत दत्तस्य नान्वाधेयत्वं सुतस्य साक्षादेव सम्बन्धित्वेन निरुक्तबन्धुमर्तृकुलत्वासम्भवादिति सुधीभिर्भाव्यम्। स्वपदेनेति। पितृमातृसुतभ्रातृदत्तमित्यत्र पित्रादिपदेनेत्यर्थः। ननु विवाहात्परतइति ऊर्द्धं संस्कारादिति च विहाय। विवाहसामान्येनैव भर्तृतत्कुलात्पितृमातृतत्कुलाच्च लब्धस्यान्वाधेयसंज्ञाकिमिति न कृतेत्याशङ्कायामाह। परिणयनसमयलब्धस्येति। अयम्भावः अन्वाधेयसंज्ञायास्तावत्तद्रूपेऽप्रजास्त्रीधने वक्ष्यमाणेभ्रात्रधिकारएव फलं परिणयनसमयलब्धे च न भ्रात्रधिकारः ब्राह्म्यादिपञ्चसु भर्त्तुः आसुरादित्रिषु पित्रोरेव तेषामभावे देवरादेरेवाधिकारात् अतः संज्ञाया स्त्रा

धारणे प्रयोजनाभावः प्रत्युत तत्साधारणे तच भर्त्रधिकार बोधकविशेषवचनेन भ्रात्रधिकारवचनस्य विरोधप्रसक्त्या तस्य सङ्कोचो वाच्यः । तथाच । प्रक्षालनाद्धि पङ्कस्य दूरा दस्पर्शनम्बरं इतिन्यायेन तद्व्यावर्त्तनमेव संज्ञायाः समुचित मिति । नच तथापि विवाहसमयादन्यत्रेत्येवोच्यतां किम्पर तदत्यादिपर्य्यन्तेनेति वाच्यम् । तथा सति विवाहात्पूर्व्वं वाग्दानोत्तरं पतिदत्ते भ्रात्रधिकारापत्तेरिति ॥ ० ॥

एतद्व्याकुरुते कात्यायनः । विवाहकाले यत्स्त्री भ्योदीयते ह्यग्निसन्निधौ । तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम् । यत्पुनर्लभते नारी नीय माना हि पैतृकात् । अध्यावाहनिकं नाम तत्स्त्री धनमुदाहृतम् । पैतृकादित्येकशेषात् पितृमातृ कुलात् यल्लभते धनम् । भर्तृगृहं नीयमाना तद ध्यावाहनिकम्भर्तृदायो भर्तृदत्तन्धनं भर्तृदाय मनविधाय मन्वादिभिर्भर्तृदत्तस्याभिधानात् । नारदेनापि भर्तृदत्तमनभिधाय भर्तृदायस्या भिधानात् तथा अन्यत्रापि भर्तृदत्ते भर्तृदाय प्रयोगो दृष्टः ।

यथा कात्यायनः । भर्त्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः । विद्यमाने तु संरक्षेत्क्षपयेे

स्तत्कुलेऽन्यथा । अस्यार्थो भर्तृदत्तन्धनम्भर्त्तरि मृते यथेष्टं विनियुञ्जीत जीवति तु तद्रक्षेदिदमुक्त रक्षताज्ञापनार्थम् । तथा व्यासवचनमपि भर्त्तृ देयपर्य्यन्तताज्ञापनार्थम् । यथा द्विसहस्रः परो दायः स्त्रियै देयो धनस्य तु । यच्च भर्त्रा धनन्दत्तं सा यथाकाममश्नुयात् । द्विसहस्रपर्य्यन्तं स्त्रियै देयो नाधिकः । केनेत्याकाङ्क्षायाम्भर्त्रैति श्रुतमन्वेति ॥ ० ॥

एतदध्यग्न्यादिकन्दायपदस्य संक्रान्तसम्बन्धिधनपरत्व शङ्कामपनयति । भर्तृदाय इति । मन्वादिभिरिति । आदिना कात्यायनविष्णुपरिग्रहः । अत्र मनुकात्यायनाभ्यां दत्तञ्च प्रीतितः स्त्रियै इत्यनेन विष्णुना चान्वाधेयमित्यनेनेति भावः । तथा च तैः सहैकश्रुतिमूलत्वानुरोधाद्दायपदं दत्तपरमिति भावः । न च वैपरीत्यं बहुषु लक्षणाप्रसङ्गान्मनुस्मृतेर्बलवत्त्वाच्च । भर्तृदायं मृते इति । अत्र मृते विद्यमाने इत्यभिधानात् । न संक्रान्तसम्बन्धिधनपरता । विन्यसेत् विनियुञ्जीत क्षपयेत् स्थापयेत् । अन्यथा स्वयं रक्षणासामर्थ्ये अन्यथा तद्धनेन वर्त्तनासम्भवे तत्कुले क्षपयेत्तत्कुलमाश्रित्य कालक्रमयेदित्यर्थ इति केचित् । केनेत्याकाङ्क्षायां केन देय इत्याकाङ्क्षायां ॥ ० ॥

न पुनरश्रुतकल्पना। तथाच। देयइति ददातिर्मुख्यः स्यात् मृतपतिधने तु तावति पत्न्याएव स्वामित्वाद्गौणः स चान्याय्यः। यच्च भर्त्तृदत्तन्धनन्तद्यथाकाममश्नीयाद्दत्तोऽपुत्रस्य मृतस्य पत्युर्धर्मे द्विसद्वत्सपर्य्यन्तएव पत्न्याअधिकारोन सर्व्वत्रेति यदुक्तं तद्विद्वद्भिरनादेयम्। एतच्च विस्तरेण वक्ष्यते।

आह याज्ञवल्क्यः। पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्। आधिवेदनिकञ्चैव स्त्रीधनम्परिकीर्त्तितम्। यच्च द्वितीयस्त्रीविवाहार्थिना पूर्व्वस्त्रियै पारितोषिकन्धनन्दत्तन्तदाधिवेदनिकम्। अधिकस्त्रीलाभार्थत्वात्तस्य।

यथा देवलः। वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनम्भवेत्। भोक्त्री तत्स्वयमेवेदम्पतिर्नार्हत्यनापदि।

तथा व्यासः। विवाहकाले यत्किञ्चिद्वरायोद्दिश्य दीयते। कन्यायास्तद्धनं सर्व्वमविभाज्यञ्च बन्धुभिः। उद्दिश्येति कन्यायाइदम्भवत्वित्युद्दिश्य वराय यद्दानं न पुनरेतदभिसन्धिं विनापीत्यर्थः अतएव विवाहकालइति प्रदर्शनार्थन्न पुनरेतदेव प्रयोजकं। दान

भिसन्धिनिमित्तत्वात् स्वत्वस्य। तथाच प्रामाणिकं वचनं। यद्दत्तं दुहितुः पत्या स्त्रियमेव तदन्वियात्। मृते जीवति वा पत्यौ तदपत्यमृते स्त्रियाः। विवाहकालइति न विशिनष्टि ॥ ० ॥

अमृतकल्पनेति। अनन्तराधिकारिणा भ्रात्रादिना स्वयं स्वत्वं गृहीत्वा द्विसहस्रपणपर्य्यन्तं स्त्रियै दातव्यमित्यमृतभ्रात्रादीनां कर्त्तृत्वकल्पनेत्यर्थः। एतच्चेति। मृतस्यापुत्रस्य पत्न्याः सर्व्वधनाधिकारित्वञ्चेत्यर्थः। वक्ष्यतइति। अपुत्रधनाधिकारिनिरूपणे इतिशेषः। आहेति। स्त्रीधनमिति प्रागुक्तेनान्वयः पित्रादिदत्तं विवाहात्पूर्व्वं परतोवा विवाहकाले दत्तस्य अध्यग्निपदेनैव प्राप्तेः। वृत्तिर्ग्रासाच्छादनविशिष्टं प्रुक्तं वक्ष्यमाणं लाभस्तृणादिवृद्धिः वराय दानं वरहस्ते समर्पणमदर्शनार्थमुपलक्षणमित्यर्थः। उपलक्षणत्वे हेतुमाह। दायभीति। तथाचाभिसन्धेः स्वत्वजनकत्वस्यान्यत्र क्लृप्ततया कि पक्षे विवाहकालस्य सहकारित्वकल्पने प्रमाणाभावोऽदृष्टकल्पनागौरवञ्च स्यादिति भावः तदुपलक्षणत्वे वचनमपि प्रमाणयति। तथाचेति। न विशिनष्टि न विशेषणं दत्तवान् स्यादितिभावः ॥ ० ॥

अभिसन्धिस्तु दुहितृधनत्वाभिधानादेव सम्बन्धोक्तः तदेवमव्यवस्थितसंख्यस्त्रीधनकीर्त्तनान्न षट्संख्याविवक्षिता किन्तु स्त्रीधनकीर्त्तनमात्रपराणि मुनिवचनानि। तदेव च स्त्रीधनं यद्भर्तृतः स्वातन्त्र्येण दानविक्रयभोगान् कर्त्तुमधिकरोति तदिदं किञ्चित्सङ्क्षिप्याह कात्यायनः। प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यन्तदा तत्र शेषन्तु स्त्रीधनं स्मृतम्। अन्यत इति पितृमातृभर्त्तृकुलव्यतिरिक्ताद्यल्लब्धं शिल्पेन वा यदर्जितन्तत्र भर्त्तुः स्वाम्यं स्वातन्त्र्यं अनापद्यपि भर्त्ता ग्रहीतुमर्हति। तेन स्त्रियाअपि धनत्वे स्त्रीधनमस्वातन्त्र्यात्। एतद्द्वयातिरिक्तधनन्तु स्त्रियाएव। यत्र दानविक्रयाद्यधिकारस्तदाह।

कात्यायनः। ऊढया कन्यया वापि पत्युः पितृगृहेऽथवा। भर्त्तुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतं। सौदायिकन्धनम्प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते। यस्मात्तदानृशंस्यार्थन्तैर्दत्तं तत्प्रजीवनम्। सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम्। विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥०॥

अध्यग्निलब्धेति । अनिबन्धलब्धेत्यर्थः । भर्तृपुत्रपति भ्रादधिकत्वापि शुल्कलाभादेवैतादिभिरभिहितत्वादिति भावः । पितृमातृभर्तृकुलेति । पितृमातृभर्त्तारो यस्मिन् कुले इति बहुव्रीहिः अन्यथा लब्धभर्तृकुलात्तयेत्यत्र भर्तृकुलादिपदाद्भर्त्रादिपरिग्रहो न स्यात् । अनापद्यपीति । तथा चोक्तद्विविधस्त्रीधने भर्तुरिच्छैव स्वत्वजनिका पत्नीस्वत्वनाशिका च तदन्यस्त्रीधने तु भर्त्ता आपत्कालोऽपेक्ष्यतइति भावः । स्त्रिया अपि धनं स्त्रीस्वत्वास्पदीभूतमपि धनम् । न स्त्रीधनम् । नेतरनैरपेक्ष्येण स्त्रिया यथेष्टविनियोज्यम् । अस्वातन्त्र्यादिति एतच्च भार्य्यापुत्रश्चेत्यादिना प्रतिपादितमेव प्राक् । स्त्रिया एवेति । तथा च कात्यायनैकवाक्यतया भार्य्या पुत्रश्चेत्यादिवचनमप्युक्तद्विविधस्त्रीधनविषयमेव । स्त्रीधनान्तरे तु स्त्रीणां स्वातन्त्र्येण यथेष्टविनियोगो निःप्रत्यूह एवेति भावः । अत्र समाद्माह । तदाहेति । आमृत्यस्यार्थे अनुकम्पार्थम् । नचैवं शुल्कलाभयोरसौदायिकत्वात् तत्रास्वातन्त्र्यं स्यादिति वाच्यम् । पूर्व्वोक्तकात्यायनवचनेनान्यतोलब्धस्य शिल्पलब्धस्य च द्वयोरेवास्वातन्त्र्यप्रतिपादनेन एतयोरपि स्त्रीधने मध्यपठितयोः स्वातन्त्र्यावगमात् ॥ ० ॥

सुदायसम्बन्धिभ्योलब्धं सौदायिकं स्थावरेऽपि भर्तृदत्तमात्रे स्त्रियादानाद्यनधिकारः । तदाह

नारदः भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत्। सा यथा काममश्नीयाद्दद्याद्वा स्थावरादृते। भर्तृदत्तविशेषणात् भर्तृदत्तस्थावरादृते ऽन्यत्स्थावरं देयमेव भवति। अन्यथा यथेष्टं स्थावरेष्वपीति विरुध्येत। भर्त्ता तु यदा दुर्भिक्षे स्त्रीधनं विना वर्त्तनाक्षमस्तदापि ग्रहीतुमर्हति नान्यदा। यदाह याज्ञवल्क्यः दुर्भिक्षे धर्म्मकार्य्ये च व्याधौ सम्प्रतिरोधके। गृहीतं स्त्रीधनम्भर्त्ता न स्त्रियै दातुमर्हति। अन्यत्र पुनरनधिकारमाह।

कात्यायनः न भर्त्ता नैव च सुतो न पिता भ्रातरो न च। आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः। यदि ह्येकतरो ह्येषां स्त्रीधनं भक्षयेद्बलात्। सवृद्धिं सच दाप्यः स्याद्दण्डञ्चैव समाप्नुयात्। तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्व्वकम्। मूलमेव तदा दाप्यो यदा स धनवान्भवेत्। अथ चेत्स द्विभार्य्यः स्यान्न च तां भजते पुनः। प्रीत्या विसृष्टमपि चेत्प्रति दाप्यः स तद्बलात्। ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः। तत्र स्वमाददीत स्त्री विभागं रिक्थिनान्तथा। स्त्रिया धनं गृहीत्वा भर्त्ता यद्यपरभार्य्यया सह वसति तान्नावजानीते। तदा गृहीतं धनं

राज्ञा वलाद्दाप्यः। भक्ताच्छादनादिकं यदि भर्त्ता न ददाति तदा तदपि स्त्रिया आक्रम्य ग्राह्यमिति स्त्रीधनलक्षणम् ॥ ० ॥

स्थावरेष्वपीति यदुक्तं तत्रापवादमाह । स्थावरेपीति। अन्यथेति । स्थावरमात्रे दाननिषेधइत्यर्थः । तदापीति। तदैवेत्यर्थः । सम्प्रतिरोधके स्वार्थमुत्तमर्णेन कृते स्वाम भावनापावरोधे ।विसर्गे दाने । ग्रासेति । ग्रासोगृहञ्च च्छमिति स्वकीयं ग्रासाच्छादनादीत्यर्थः । स्वभर्त्ते साधारणधनाधिकारिणान्देवरादीनां सकाशाद्विभागं स्वभ र्तृयोग्यांशमादद्यीतेत्यर्थः । केचित्तु स्वभ्रिनाभर्त्रादि सम्बन्धिनां सकाशात् स्वं विभागं ग्रासाच्छादनादिरूपमाद द्यीतेत्यर्थइति व्याचक्षुः । तदसत्। तच स्वमित्यनेनैव गता र्थत्वादिति ॥ ० ॥

इदानीं स्त्रीधनविभागोऽभिधीयते।

तत्र मनुः॥जनन्यां संस्थितायान्तु समं सर्व्वे सहो दराः । भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः। द्वन्द्वाश्रवणेऽपि तत्तुल्यार्थकचकारेण भ्रातृभगिन्यो रितरेतरयुक्तयोर्विभागप्रतिपादनाद्भगिन्यः सोद

रास्य विभजेरन्नित्ययमेवास्य वचनस्यार्थः। बृहस्पति रपि चकारात्समुच्चयमाह ।

स्त्रीधनन्तदपत्यानान्दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु न लभेन्मातृकन्धनम्। अपत्यपदम्पुत्रपरं। तेषामप्रत्ताभिर्दुहितृभिः सह मातृधनविभागः।

तथाच शङ्खलिखितौ। समं सर्व्वे सोदर्य्या द्रव्यमर्हन्ति कुमार्य्यश्च। सर्व्वत्रैव प्रथमम्पुत्रोपादानात् सर्व्वावस्थस्य पुत्रस्य मातृधनेऽधिकारः। चकारश्रुतिश्च सर्व्वत्रानुगता समुच्चयवाचिका। एतावताप्युद्धारमन्तस्य देवलवचनं गतश्चरतः ॥०॥

इदानीं स्त्रीधननिरूपणानन्तरमित्यर्थः। समभिति। विंशोद्धारनिषेधाय। भगिन्योऽद्वका: सनाभयः सहोदराः। अत्र वचने द्वन्द्वश्रुतिर्नास्ति येन तदवगतसाहित्यबलेन भगिनीभ्रात्रोर्युगपदधिकारः स्यात्। किन्तु। क्रमेणैव तयोरधिकारः। क्रमस्य न पाठिकः। किन्तु प्रथमम्भगिन्याः ततो भ्रातुरित्येवं रूपः। मातुर्दुहितुरभावे दुहितृणान्तदन्वय इत्यादिनारदादिवचनेषु वक्ष्यतः प्राप्तक्रमस्य प्राप्तेरिति केषाञ्चिन्मतन्तदपाकर्त्तुमाह। इन्द्राश्रवणेऽपीति। तत्तुक्ता

र्थेति । चार्थेद्वन्द्वद्युक्तेर्दैवसमानार्थता चकारस्य । युगपद मिति । दुहितुः पृथगुपादानापुत्रपत्नीकस्य चाधिकाराभावा दिति भावः । सर्व्वावस्थस्येति । संस्तृतस्य चेत्यर्थः । अत्र यशो दरपदाद्युपादानात् । कन्यासत्त्वे दत्तकादीनामधिकारः दुहित्रपेक्षया पञ्चमांशभागिता पुत्त्रवदिति केचित् । एतावतापि उक्तक्रमेण यौगपद्यावगमेऽपि । उद्वाहमात्रस्य उद्वाहोवादः सच चकारश्रुतिबलान्न तयोर्विभागे साहित्याव गमः । व्रीहियवपाकौ चेत्यादाविव भिन्नकालीनयोरप्येक जातीयक्रियासम्बन्धमात्रेण तस्याश्चरितार्थत्वात् । अन्यथा । पत्नीदुहितरश्चेत्यादौ चकारश्रुतिबलेन पत्नीदुहित्रोरपि युगपदधिकारापत्तेरित्येवं रूपः तत्र मतस्य समर्थस्य गत त्वस्तन्निराकरद्वत्यर्थः ॥०॥

यथा सामान्यम्पुत्त्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम् । अप्रजायां हरेद्भर्त्ता माता भ्राता पिता पिवा । इह पुत्त्रकन्ययोः साधारणं मातृधनमिति सुव्यक्तम् । केवलकुमार्य्याः सकलमातृधनाधि कारित्वे च यौतकधने विशेषवचनं मन्वादीनाम नर्थकं स्यात् । सर्व्वत्राधिकाराविशेषात् । यः पुन रेवं समाधानं ब्रूते । भ्रातृभगिन्योस्तुल्यवज्जन नीधनाधिकारित्वे समभागविधानं युक्तम् । केवल

किञ्चेति । विभक्ता इति । एकत्र प्रतिवासिनो यदा विभजेयुः तदा यतो यस्मात् । एकत्र प्रतिवासिनो भ्रात्रादेरुदयः धनार्जनं स पुनर्विभागे द्व्यंशं लभेत इत्यर्थः । द्व्यंशः स्वार्जित एव अर्जकोद्व्यंशमर्हतीत्येकमूलकत्वात् । इतरेषामेकैको भागः । एकैकस्येति शेषः । मुनेः कात्यायनस्य । तेन एकत्र प्रतिवासिनोत्या साधारणधनोपघातेन द्व्यंशित्वस्य प्रतिपादितत्वात् । अनुपघातार्जिते भागानभिधानात् । व्याख्यातुः श्रीकरस्य । तेन तथैव स्फुटं व्याख्यातत्वात् । अभिप्रायम्प्रकाशयति । अनुपघातइति । एवञ्चेदुपघातार्जिताभिप्रायश्चेत् । तथात्वं द्व्यंशित्वम् । अविभक्तत्वे विभागप्रागभावः संसृष्टत्वे विभागप्रध्वंसः । एकत्र प्रतिवासस्य अभिन्नधनसम्बन्धस्य । ननु वचनबलात् संसृष्टधनविषयत्वप्रतीतेस्तद्विरोधात्कुतोऽविभक्तविषयत्वकल्पनमतोवचनमन्यथोपपादयति । साधारणेत्यादि । न केवलमित्यत्र हेतुमाह । होलाकेति । तथाच यथा होलाकानुष्ठानार्थं होलाका कर्त्तव्येति श्रुतिः कल्प्यते न कर्त्तृबोधकप्राच्यादिपदवती । तथा साधारणधनोपघातेनार्जितेऽर्जको द्व्यंशं गृह्णीयादित्येव श्रुतिः कल्प्यते नत्वर्जकविशेषणतया संसृष्टपदवतीति भावः । तथाचारे पदवैयर्थ्यरूपबाधकाभावात् सामान्यश्रुतिकल्पनमस्तु स्मृतौ तु तथात्वे विशेषणवैयर्थ्यमिति विशेषाकारैव श्रुतिः कल्प्यत इत्यत आह ॥ ० ॥

किञ्चोपघातार्जिते अर्ज्जकस्य भागद्वयमिति तावन्निर्विवादम्।

साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधं। शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः। तस्य भागद्वयं देयं शेषास्तु समभागिनः। इत्यनेनोपघातएव भागद्वयस्य विधानात्। असाधारणधन शरीरव्यापारमात्रार्जिते तु न भागद्वयं न्याय्यम् किन्त्वधिकं सर्व्वमेव वा किञ्चिदूनं वा। तत्र किञ्चिदूनस्य मुनिभिर्निबन्धृभिश्चानुक्तत्वात्। साधारण धनव्यापारेण भ्रात्रन्तरस्य भागनिर्गमात् तदभावे भागाभावएव युक्तः। द्विरर्जयितुरित्येतस्य च न्यायमूलत्वमेव युक्तम्। अन्यथा श्रुतिकल्पने अर्जकत्वानुप्रवेशोवा पृथग्वाधिकारो कल्पनीयः स्यात्। तस्मादनुपघातार्जितमर्जकस्यैव नेतरेषामिति सिद्धम्॥ ० ॥

किञ्चेति। किन्त्वधिकमिति। भागद्वयाधिकमित्यर्थः। अधिकस्यैव द्वैविध्यमाह। सर्व्वमेववेति। किञ्चिदूनमिति च। सर्व्वमितिशेषः। भागनिर्गमादिति। भागश्रवणादित्यर्थः। तदभावे भ्रात्रन्तरभागनिर्गमहेतुत्वेन साधारणधनोपघात

भ्रात्रन्तरव्यापारयोरभावे। ननु अर्जको द्व्यंशमर्हति येन चैवा
मुत्पादितं स्यात् स द्व्यंशमेव हरेदित्यादौ सामान्यत एवार्ज
कतया द्व्यंशश्रुतेरनुपघातेऽपि द्व्यंश एवार्जकस्यास्यामत आह।
द्विरंशयितुरिति। एतस्य एतदर्थकस्य। अर्जको द्व्यंशमर्हती
त्यादेर्न्यायमूलत्वं यच्चैकस्य धनद्वारेणापरस्य धनशरीराया
साभ्यामित्युक्तयुक्तिमूलत्वम्। अन्यथा न्यायामूलत्वे अर्ज
कत्वानुप्रवेशो वेति। पिता गृहीतांशद्वयं स्वयमिति मूलश्रुता
वर्जकत्वविशेषणप्रवेश इत्यर्थः। नन्वेवं अर्जकः पिता द्व्यंशं गृह्णी
यादिति श्रुतिकल्पने पितुरनर्जकस्य द्व्यंशानुपपत्तिरर्जकस्य
भ्रात्रादेर्द्व्यंशानुपपत्तिश्चेत्यत आह। पृथग्वेति। पितृत्वादिनि
रपेक्षः पृथगर्जक एवाधिकारी कल्प्यः स्यात्। तथा चोभय
थैव श्रुतिकल्पने गौरवात् न्यायमूलत्वमेव युक्तमिति भावः।
उपसंहरति। तस्मादिति। ननु न्यायमूलत्वे अर्जकस्य व्यापार
तारतम्येन विभागतारतम्यं स्यात्। तथा च सामान्यत एव
तस्य भागद्वयाभिधानमयुक्तमतोऽविभक्तार्जिते अर्जकस्य
भागद्वयमितरेषामेकैको भाग इति सामान्यश्रुतिमूलत्वमेवो
चितमर्जकद्व्यंशित्वस्य। अत एवानुपघातार्जितेऽपि प्रतिग्रहधने
अविभक्तार्जितत्वमात्रेण सर्वेषां विभागो लोके दृश्यते इति
श्रीकरमतमुत्थाप्य दूषयति ॥०॥

किञ्चाविभक्तार्जितं सर्व्वं विभजेयुरिति न तावत् सामान्येन वचनं कल्पनीयम्। शौर्य्यादि धनपर्युदासदर्शनात्।

तथा मनुः। विद्याधनं तु यद्यस्य तत्तस्यैव धनम्भवेत्। मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च।

तथा मनुविष्णू। अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्ज्जितम्। स्वयमीहितलब्धन्तन्नाकामो दातु मर्हति। अनुपघ्नन्निति विद्यादिधनेऽपि सम्बध्यते। सत्युपघाते विभागवचनदर्शनात्।

तथा याज्ञवल्क्यः। पितृद्रव्याविरोधेन यदन्यत्स्वयमर्जितम्। मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत्। क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः। दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च।

तथा नारदः। शौर्य्यभार्य्याधने हित्वा यच्च विद्या धनम्भवेत्। त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः।

तथा व्यासः। विद्याप्राप्तं शौर्य्यधनं यच्च सौदायिकम्भवेत्। विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः। सौदायिकं सुदायसम्बन्धिभ्यो यल्लब्धम्।

पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्व्वकम्। तस्य तन्नापहर्त्तव्यं मात्रा दत्तञ्च यद्भवेत्। अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम्। दायादेभ्यो न तद्दद्यात् विद्यालब्धञ्च यद्भवेत्॥०॥

किञ्चाविभक्तेत्यादि। शौर्य्यादिधनेति। अनुपघातार्जित शौर्य्यादिधनइत्यर्थः। सम्बध्यतइति। विद्याधनन्तु यद्यस्येति प्राग्वचनोक्तविद्याधनेऽपि सम्बध्यतइत्यर्थः। वैद्योऽविद्यायेति प्रागुक्तवचने पित्र्यन्द्रव्यं समाश्रित्य न चेत्तेन तदर्जितमिति श्रुतेरत्रापि तदेकवाक्यतया विद्याधनेऽप्यनुपघातान्वयइति भावः। क्रमादभ्यागतमिति। क्रमादागतमित्यर्थः। एतच्च साधारणमात्रोपलक्षणम्। तेन भ्रातॄणां स्वार्जितधनेऽपीयं व्यवस्था। उद्धरेदित्येकवचनेन अन्येषां कायिकव्यापारस्याभावउक्तः॥०॥

तदेवमादिभिर्वचनैर्व्यावद्दर्णवर्णान्तरालानां सङ्कीर्णजातानां सकलविद्यानिमित्तस्य सौदायिकस्य च स्वजनदत्तस्य च तथा मैत्रविवाहमधुपर्कप्राप्तस्य शौर्य्येण च युद्धादिना प्राप्तस्य कृषिसेवावाणिज्यादिना च श्रमेणोपार्ज्जितस्यानुपघातेन च

स्वशक्तिमात्रार्ज्जितस्य पर्य्युदासात्सर्व्वमेव पर्य्युदस्त मिति। तदितराभावान्निर्व्विषयोविधिः। अथ यथा कथञ्चिदेकोद्विकोवा विषयोलभ्यते तदा तदेव स्वपदेन निर्द्देष्टुमुचितं मुनीनाम्। अविभक्तार्ज्जित ममुकधनं विभजेदिति लाघवात् स्वपदात् शीघ्र प्रतीतेश्च। नतु शौर्य्यादिधनेतरतया वहुतरपद प्रयोगापत्त्या गौरवात्। पर्य्युदासत्वे च सर्व्वमुनि भिरेव सकलपर्य्युदसनीयपदानुकीर्त्तनं कर्त्तव्यम् तद्विना तदितरस्थापनानुपपत्तेः। मुनीनां पर्य्युदा सवचनं वालप्रलपितमिव स्यात्॥०॥

यावद्वर्णेति। वर्णाः ब्राह्मणादयश्चत्वारः वर्णान्तराणा अम्बष्ठकरणादयः। सङ्कीर्णजातारथकारादयः। सर्व्वमेवेति। अनुपघातार्जितसर्व्वमेवेत्यर्थः। निर्विषयोविधिरिति। अनु पघातेन शौर्य्याद्यर्जितनत्तद्भिनेतरदविभक्तार्जितं विभजेदिति विधिर्भवदभिमत. सच निर्विषयः यादृशमप्राप्तविषयमप्राप्य विधित्वं तादृशविषयशून्यः। अत्र हेतुः तदितराभावादिति। न्यायप्राप्तेतरस्य विषयस्याभावादित्यर्थः। उपघातार्जित विभागस्य तु न्यायतएव प्राप्तत्वमिति भावः। नन्वविभक्तलब्ध निधिरेकोस्ति विषयः क्वपयोदाशीनदत्तं आदाय द्विकोवा

वर्त्तते । एतयोश्चासाधारणधनव्यापारानर्जितत्वेन तद्वि भागस्य न्यायादप्राप्तेरिति तत्कथं तद्विषयत्वमित्याशङ्कते। अर्थेति । स्वपदादिविशेषरूपेण स्वबोधकपदात् । ननु शौर्य्या दीति । तत्वनुपघातेन शौर्य्याद्यर्जितेतराविभक्तार्जितधनतये त्यर्थः । बहुतरपदेति । पदार्थस्य वाक्यार्थतया वाक्यघट कपदार्थानामुपस्थितौ तदन्विताम्वयक्रमेण प्रकृतोपस्थिति रिति विलम्बोपस्थितिकत्वादित्यर्थः । इदमुपलक्षणम् । पदार्थोपस्थित्यादिकल्पनागौरवमपि द्रष्टव्यम् । बालप्रल पितमिति । विद्याधनेतरद्विभजेत् शौर्य्यादिधनेतरद्विभजे दित्यादिप्रत्येकाभिधाने कस्मादप्यभिधानान्न विभाज्यता वच्छेदकस्य उक्ततावद्धनेतराविभक्तार्जितधनत्वस्य परिचयः। तथाच । तादृशधनविभागस्य प्रकृतस्याप्रतिपादकतया निरर्थकत्वेन बालप्रलापतुल्यत्वात् । बालप्रलपितमि त्यर्थः ॥ ० ॥

प्रदर्शनार्थत्वे त्वनास्थया केन चित्किञ्चित्कीर्त्ति तम्॥ केनचिच्च किञ्चिदिति युक्तं सर्व्वस्याकीर्त्त नम्। तस्मात्साधारणधनोपघातार्जितन्धनं विभ जेदिति विधिः। शौर्य्यादिपदञ्च वाक्येषु प्रदर्शना र्थम्। अतोऽविभक्तार्जितत्वमात्रेण धनस्य साधा रणत्वाभिधानमप्रामाणिकम्।

किञ्च क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः । दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च । अत्र याज्ञवल्क्यवचनेऽपि पितृपितामहादिधनमपि केनचिदपहृतं योऽभ्युद्धरेत्तस्यैव तन्नान्येषामिति भवतोऽपि संमतं। तेन पूर्व्वसम्बन्धलेशे सत्यपि अविभक्तानामप्यभ्युद्धारकत्वेन तत्र सम्बन्धं निराकुर्व्वन्न पूर्व्वत्वेन स्वार्ज्जिते सुदूरमेवान्येषां सम्बन्धं निरस्यति । यच्चोक्तं श्रीकरेण । यदि पितृद्रव्यानुपघातार्ज्जितमर्ज्जकस्यैव तत्तदा प्रतिग्रहोपात्तं धनन्न कदाचित् भ्रात्रन्तरस्य भवेन्नहि प्रतिग्रहः पितृद्रव्यविनाशेन भवति। द्रव्यं हि दातुरानमनमुखेन प्रतिग्रह उपयुज्यते ॥ ८ ॥

मन्मते अनुपघातार्जनं यत्र यत्र धने सम्भवति तत्तदुदाहरणार्थत्वेन नानर्थक्यमित्याह । प्रदर्शनार्थत्वइति । अथात्र निषेधएव न पर्य्युदासइत्येकेन सर्व्वाकीर्त्तनेऽपि न क्षतिरित्यत आह । किञ्चेतीति चूडामणिस्तन्न । वाक्यभेदकल्पनागौरवापत्तेः पर्य्युदासस्यैव न्याय्यत्वात् । किन्तूपघाताभावे विभागाभावइति प्रागुक्तेः । युक्त्यन्तरमाह किञ्चेति । अविभक्तानामपीति । अविशेषेण वचनस्य विभक्ताविभक्तविषयत्वादित्याशयः

अपूर्व्वत्वेन पूर्व्वसम्बन्धत्वेनापूर्व्वत्वेन । पितृद्रव्यविनाशसम्भवाच्च र्भवति । द्रव्यं ह्रीति । आगमनं सन्तोषः सुखेन द्वारेण ॥०॥

एकहायन्यादिकमिव क्रये कर्त्तृशरीरधारणेन वा ऽपयोव्रतादिकमिव ज्योतिष्टोमे तत्र तावद् दृष्टार्थे दाने न द्रव्यान्तरग्रहणे न दातुरानतिरपेक्षितेति न दात्रानत्या द्रव्यमुपयुज्यते प्रतिग्रहस्याल्पकालीनत्वान्न तत्कर्त्तृभोजनमपेक्षितम् । दीर्घकालीनज्योतिष्टोमेनैव स्वर्गकर्त्तुरिति तन्मन्दम् । दापकानत्यर्थमुपहारप्रदानादिना धनोपघातस्य लोकबहुलमुपलम्भात् । कलौ च प्रतिग्रहधनस्य सेवाधनसमानत्वात् अतएव कलौ त्वनुगमान्वित इति स्मरन्ति ॥०॥

एकहायन्यादिकमिति । अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यत्र विक्रेतुर्वशीकरणद्वारा यथैकहायनीमूल्यतया उक्तकर्मोपयोगिनी तद्वदित्यर्थः । आदिना वाससा क्रीणातीत्युक्तवाससः परिग्रहः । शरीरधारणमन्तराप्रक्रान्तकर्म्मण इतिशेषः । अतएव दूषयिष्यति । प्रतिग्रहस्य चेति । नच वाससोगोर्वैकल्पिकत्वं विषमशिष्टत्वात् । तथाच वासोविषम

शिष्टाया एकस्या एव गोः क्रयसाधनत्वात् पृथक्क्रियासाधनत्वा वासस: कथमादिपदग्राह्यत्वं वाससा सोमं क्रीणातीति पृथक् वाक्यबलेन वासोविशिष्टगवा क्रये प्राप्तस्यावगमात् प्रत्यक्रये वासोविशिष्टाया गोरादिपदग्राह्यत्वसम्भवात् । पक्षान्तर क्रये मूल्यतयोक्तसुपर्णादिपदग्राह्यत्वसौलभ्याच्च । पयोव्रतादि कमिवेति । दीर्घकालीनज्योतिष्टोमादौ पयःपानस्य ब्राह्मणस्ये त्यनेनाभिहितं चीरभोजनादिकं यथा शरीरधारणद्वारो पयुज्यते तद्वदित्यर्थः इयं क्रमेण दूषयति । तत्रेत्यादि । प्रति ग्रहस्येत्यादि च । दीर्घकालीनज्योतिष्टोमस्यानेकाहसाध्य त्वात् शरीरधारणार्थं यागकर्तुर्यथा भोजनमपेक्षितन्तथा प्रकृतेनेति व्यतिरेकदृष्टान्तः । उपहारप्रदानादिना पारि तोषिकद्रव्यदानादिना उपदानादिनेति पाठे उत्कोचदाना दिनेत्यर्थः । कलौ चेति तेन सेवया बहुतरकालसाध्य त्वात् । शरीरधारणार्थमपि धनोपघातः क्वचित्कइत्युक्तम् । अनुगमेति । अनुगम उपसर्पणं तेनान्वियते दीयते इति अन्वयः । तथा चोक्तं कृते तु दीयते गत्वा त्रेतायामाहृताय वै । द्वापरे याचमानाय कलौ त्वनुगमान्विते इति ॥ ० ॥

यच्च चिरावस्थितेर्व्यभिचारान्न प्रतिग्रहकारणत्व मानतेरतश्चानतिद्वारा न प्रतिग्रहार्थत्वन्द्रव्यस्येति

प्रोक्तन्तन्मन्दतरम् । आनतिद्वारेण चिराश्रय णादीनाम्प्रतिग्रहकारणत्वात्पुरुषस्याशयवैचित्र्येण कस्य चिद्धनदानेन कस्यचिच्चिराश्रयणादिना कस्य चिद्गुणानुसन्धानमात्रेणा‍ऽऽदर्शनात् । सह कार्य्यभावेन कार्य्यानुत्पत्तेर्नाकारणता । अतएवो क्तम् । आनतेरनियतोपायपरिणामत्वात् यद प्युक्तम् । अथ तत्सन्निधिमन्तरेण प्रतिग्रहस्यासम्भ वात् । भोजनमन्तरेण च तदयोगात् । तस्यां स्थितौ व्याप्रियमाणन्धनम्प्रणाल्या प्रतिग्रहन्निष्पा दयतीति ॥ ० ॥

चिरावस्थितेरिति । चिरावस्थितेरपि प्रतिग्रहदर्शनादान तेर्व्यभिचारान्न कारणता इत्यर्थः । आनतिद्वारेण आनति द्वारेणैव नतु स्वातन्त्र्येण. तेन नानतेर्व्यभिचारइति भावः । चिराश्रयणादीनामित्यादिना धनदानगुणानुसन्धानयोः परिग्रहः ननु चिराश्रयणादीनाम्परस्परव्यभिचारेण कथ मानतिम्प्रति कारणतेत्यतआह । पुरुषाशयेति । पुरुषाश यस्य भावस्यानतिरूपस्य वैचित्र्येणेत्यर्थः । तथाचानतिगतवै जात्यव्यक्तीनां प्रत्येकस्य चिराश्रयणादीनां कार्य्यतावच्छेद कत्वान्न व्यभिचारइति भावः वस्तुतएवामेकशक्तिमत्त्वेनैव

कारणत्वं तेनानतिगतमात्रावैजात्यकल्पने न क्षतिरिति बोध्यम् । दर्शनादिति । आनतेरिति शेषः ननु तथाप्यन्वय व्यभिचारः सत्यपि चिराश्रयणादौ कस्य चिदानत्यनुत्या दादतआह । सहकार्य्येति पुरुषाशयविशेषः सहकारी तद भावात्तत्र नानतिरिति व्यभिचारइति भावः । केचित्तु ननु सत्यामप्यानतौ कश्चित्प्रतिग्रहाप्राप्ता कथमानतेः प्रतिग्रह कारणत्वमतआह । सहकार्य्येतीत्याहुः । अनियतोपायेति । परस्परनिरपेक्षनानोपायसाध्यत्वादित्यर्थः तेनैकशक्तिमत्त्वा द्वैजात्याद्वा कार्य्यकारणभावइति भावः । श्रीकरेणैव प्रति ग्रहे प्रकारान्तरेण पितृद्रव्योपघातमावेदितं यत्प्रतिबन्धि मुपन्यस्य निरसितन्तदपि दूषयितुमाह । यदप्युक्तमिति निष्पादयतीत्यन्तं यदप्युक्तमित्यर्थः । तस्यां स्थितौ प्रतिग्रहा वधिदातृषन्निधिस्थितौ । प्रणाल्या परम्परया ॥ ० ॥

तदा ज्योतिष्टोमादिकर्म्मणः प्राचीनमपि भोजनं शरीरस्थितौ ।व्याप्रियमाणम्प्राचीनशरीर स्थितिमन्तरेण ज्योतिष्टोमाद्यनिष्पत्तेः । प्रणाल्या ज्योतिष्टोमार्थत्वमित्यपि सर्व्वमेव भोजनं क्रत्वर्थं स्यान्न पुरुषार्थं । तथाच । तत्साधनमपि द्रव्यं क्रत्वर्थं स्यात् । तदर्ज्जनोपायोऽपि क्रत्वर्थं स्यादिति

बधिरौ तथा। उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः।

क्लीवश्च कात्यायनेन दर्शितः। न मूत्रं फेनिलं यस्य विष्ठा चाप्सु निमज्जति। मेढ्रश्चोन्मादशुक्राभ्यां हीनः क्लीवः स उच्यते। जातिपदमन्धबधिराभ्यां सम्बध्यते। वर्णानुच्चारको मूकः वेदग्रहणासमर्थो जडः।

तदाह याज्ञवल्क्यः। पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जडः। अन्धोऽचिकित्स्यरोगार्त्ता भर्त्तव्यास्ते निरंशकाः। पङ्क्तिं न गच्छतीति पङ्गुः निरंशकत्वेऽपि पतिततत्सुतव्यतिरिक्ता भर्त्तव्याः।

तदाह देवलः। मृते पितरि न क्लीवकुष्ठ्युन्मत्तजडान्धकाः। पतितः पतितापत्यं लिङ्गी दायांशभागिनः। तेषां पतितवर्ज्जेभ्यो भक्तवस्त्रं प्रदीयते। तत्सुताः पितृदायांशं लभेरन्दोषवर्जिताः। लिङ्गी प्रव्रजितादिः। पतितपदेन तत्सुतस्याप्युपादानम् पतितोत्पन्नत्वेन पतितत्वात्।

तदाह बौधायनः। अतीतव्यवहारान् ग्रासाच्छादनैर्बिभृयुः अन्धजडक्लीवव्यसनिव्याधितादींश्चाकर्म्मिणः पतिततज्जातवर्जम्।

तत्र नारदः । पितृद्विट् पतितः षण्ढो यश्च स्या दौपपातिकः । औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ।

आह कात्यायनः । असमोढासुतश्चैव सगोत्रा यस्तु जायते । प्रव्रज्यावसितश्चैव न रिक्थन्तेषु चार्हति ॥ ० ॥

विकर्मस्थाः श्रौतस्मार्त्तविहितकर्म्मणोविरोधीनि यानि कर्म्माणि अगम्यागमनादीनि तत्कारिण इत्यर्थः । जन्मार्थकं जातिपदमित्यर्थः तेन जन्मान्धजन्मबधिरावित्यर्थः । तत्सुत इति । पातित्यानन्तरमुत्पादितसुत इत्यर्थः । यद्यपि पतितपुत्रस्यापि पतितत्वमेव तथापि तस्य पृथगुपादानन्तदितरेषां क्लीवादिपुत्राणामंशित्वज्ञापनार्थमिति । नच पातित्यानन्तरोत्पन्नपतितत्वेनैव प्राप्तेस्तत्सुत इति प्रागुत्पन्नपतितपुत्रसंग्रहार्थमित्येव किन्न स्यादितिवाच्यम् । क्लीवादिपुत्राणामिव तस्यापि निर्द्दोषत्वात् । विभागार्हतायाञ्चाव्यत्वात्तन्निषेधस्य वाचनिकत्वे चादृष्टार्थकल्पनागौरवापत्तेः । अचिकित्स्यरोगार्त्त इति श्रुतेर्यदि विभागानन्तरमौषधादिना रोगनिवृत्तिस्तदा तस्यांशित्वमेवेति प्रतिपत्तव्यम् ॥ ० ॥

हीनवर्णस्त्रीपरिणयनानन्तरमुत्तमवर्णस्त्रीप

रिक्थने द्वयोरप्यक्रमोढासवर्णयोः सगोत्रात् नियुक्तादुत्पन्नः क्षेत्रजः पुत्रोनार्हति धनं अक्रमोढायामपि सवर्णेन परिणेत्रोत्पादितः पुत्रोधनाधिकारी। क्रमोढायामसवर्णजातोपि।

तदाह कात्यायनः। अक्रमोढासुतस्त्वृक्थी सवर्णश्च यदा पितुः। असवर्णप्रसूतस्तु क्रमोढायास्तु योभवेत्। प्रतिलोमप्रसूतायास्तस्याः पुत्रोन रिक्थभाक्। ग्रासाच्छादनमात्रं तु देयं यद्वन्धुभिः कृतम्। वन्धूनामप्यभावे तु पित्र्यं द्रव्यं तदाप्नुयात्। स्वपित्र्यन्तद्धनम्प्राप्तं दापनीया नबान्धवाः। अस्तिच क्लीवादीनां दारपरिग्रहः।

यद्यर्थिता तु दारैः स्यात् क्लीवादीनां कथञ्चन। तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति। तन्तुरपत्यम्। न चापुंस्त्वात् क्लीवस्य जननासामर्थ्यात् अध्ययनाभावात् मूकादेरुपनयनाभावेन पतितत्वात्कथं दारसंबन्धइतिवाच्यम्। क्लीवस्य पत्न्यामन्येन पुत्रोत्पादसम्भवात् उपनयनानर्हस्यानुपनीतत्वे शूद्रवदपतितत्वात्तेनैतेषां यथा सम्भवमौरसक्षेत्रजाः क्लीवत्वादिशून्याः स्वपित्रनुसारेण भागधारिणः ॥ ० ॥

अपवर्ज्जातोऽपीति । उत्तमवर्णेनाधमवर्णायामुत्पादितो इत्यर्थः प्रतिलोमेति । हीनवर्णेनोत्तमवर्णायामुत्पादित इत्यर्थभागित्यर्थः । बन्धुभिः तस्य पितृबन्ध्वादिभिः तत्पितृ भ्रात्रादिभिः । अपित्र्यमिति । यदा बन्धुभिः अपित्र्यमेव धनं प्राप्तन्तु तत्पितृधनं प्राप्तन्तदा तद्ग्रासाच्छादनं राज्ञा बान्धवा न दापनीयाः । अपित्र्यमिति पाठे प्रतिलोमजस्य न पितृ सम्बन्धि इति स एवार्थः । तथाच प्रतिलोमजाय ग्रासाच्छाद नमबन्धुभिस्तत्पितृधनप्राप्तावेव देयं नान्यथेत्यर्थः । क्लीवादेर्दार परिग्रहासम्भवात् कथम्पुत्रसम्भवइत्याशङ्कामपनेतुमाह । अस्ति चेति । यथा सम्भवमिति । मूकादेरौरसस्य क्षेत्रजस्य च सम्भवः क्लीवस्य तु क्षेत्रजमात्रस्य सम्भवइति । अपित्र्यनुसारे णेति । अपितुर्भ्रातृपौत्रादिपुत्रक्षत्रियापुत्रत्वादिना यादृशो भाग स्तादृशभागहारिण इत्यर्थः ॥०॥

दुहितरश्च परिणयनं यावद्भर्त्तव्याः अपुत्राश्च स्त्रियो यावज्जीवम् ।

यदाह याज्ञवल्क्यः । औरसाः क्षेत्रजास्त्वेषां नि र्दोषा भागहारिणः । सुताश्चैषां प्रभर्त्तव्या यावद्वै भर्तृसात्कृताः । अपुत्रा योषितश्चैषाम्भर्तव्याः साधुवृत्तयः । निर्वास्या व्यभिचारिण्यः प्रतिकूलास्त थैव च ॥

सम्प्रति विभाज्यमविभाज्यं चोच्यते।

तत्र कात्यायनः — पैतामहञ्च पित्र्यं च यच्चान्यत्स्वयमर्जितम्। दायादानां विभागे तु सर्वमेतद्विभज्यते। यच्चान्यदिति चकारः स्वयमित्यनेन सम्बध्यते। स्वयञ्चार्जितमिति चकारादन्यस्यापि तदर्जनं साधारणद्वारेणेत्यर्थः। अनुपघातोपात्तमविभाज्यमाहतुर्मनुविष्णू — अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जितम्। स्वयमीहितलब्धन्तन्नाकामो दातुमर्हति। पितृद्रव्योपघाताभावेन द्रव्यद्वारेणेतरेषां व्यापारः स्वचेष्टालब्धत्वेन शारीरोऽपि व्यापारो नेतरेषामिति अर्जकस्यैव तदसाधारण्ये स्वयमीहितलब्धन्तदिति हेतुत्वेनोपन्यासात्।

तथाच व्यासः — अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम्। दायादेभ्यो न तद्दद्याद्विद्यालब्धञ्च यद्भवेत्। स्वशक्तिमात्रेण यदर्जितमिति सामान्येनाभिधानात्सर्वमेवंविधमसाधारणं द्रव्यं। स्वशक्तिप्राप्तस्यापि विद्याधनस्य समाधिकविधेः साधारणत्वात्॥—॥

यावज्जीवमिति । भर्त्तव्या इति पूर्वेणान्वयः । भर्त्तव्यात्कृता
इति । तेन तेषां विवाहोऽप्यवश्यं कारयितव्यमिति प्रतिपन्नम् ॥
बम्बति क्लीवादिभिन्नेनाधिकारिनिरूपणानन्तरमित्यर्थः ॥
पैतामहञ्चेति । सन्निधिधनमात्रोपलक्षणम् । साधारणधन
द्वारेणेति । शरीरश्रमसाधारणेनापि बोध्यन्तथैव वक्ष्यमाण
त्वात् । स्वयं स्वधनश्रममात्रार्जितम् । असाधारणं भ्रात्रन्त
रैरविभाज्यं । ननु विद्यालब्धस्य पृथगुपादानं व्यर्थम् । अना
श्रित्येति सामान्याभिधानेन तस्यापि प्राप्तेरतस्तत्प्रयोजन
माह । स्वशक्तिप्राप्तस्यापीति ॥ ० ॥

न्यूनविद्याविद्यनिराकरणार्थं विद्यालब्धपदम् ।
तथा याज्ञवल्क्यः । पितृद्रव्याविनाशेन यद्
न्यत्स्वयमर्ज्जितम् । मैत्रमौद्वाहिकञ्चैव दाया
दानां न तद्भवेत् । मैत्रादिग्रहणम्प्रदर्शनार्थं ।
एवमादिषु प्रायेणानुपघातसम्भवात् ।
तथा मनुः । विद्याधनन्तु यद्यस्य तत्तस्यैव
धनम्भवेत् । मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च ।
तथा च व्यासः । विद्याप्राप्तं शौर्यधनं यच्च
सौदायिकं भवेत् । विभागकाले तत्तस्य नान्वेष्टव्यं

स्वरिक्थिभिः। पितृपितृव्यादिभ्यः सुदायसम्बन्धिभ्यः प्रसादादिना लब्धं सौदायिकम्।

तथाह नारदः। शौर्य्यभार्य्याधने हित्वा यच्च विद्याधनम्भवेत्। त्रीण्येतान्यविभाज्यानि प्रसादोयश्च पैतृकः। भार्य्याप्राप्तिकाले लब्धम्भार्य्याधनम्। औद्वाहिकमित्यर्थः। एतानि वर्जयित्वा अन्यद्विभजेदित्यनुवर्त्तते वाक्यान्तरीयम्। तदेवमादिभिः शौर्य्यादिधनत्वमविभाज्यत्वे कारणन्नोच्यते। शौर्य्याद्यर्जितस्यापि विभागश्रुतेः।

तथाच व्यासः साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम्। शौर्य्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः। तस्य भागद्वयं देयं शेषास्तु समभागिनः। साधारणद्रव्येणार्जितस्य धनस्य विभागं वदति।

नारदः। कुटुम्बं विभृयाद्भ्रातुर्योविद्यामधिगच्छतः। भागं विद्याधनात्तस्मात्स लभेताश्रुतोऽपि सन्॥ ० ॥

निराकरणार्थमिति। तथाच विद्यालब्धस्य न्यूनविद्यैर्न विभागः तदन्येषान्तु तथाविधानां केनापि सह न विभाग

इति भागस्य द्वैविध्येनैकविध्यभावात् तस्य पृथगुपन्यास इति भावः। न च साधारणधनसम्बन्धेनापि विद्यार्जिते विभाग निषेधार्थ एव किन्न स्यादिति वाच्यम्। वैद्योऽविद्यायेति वक्ष्य माणवचनविरोधात्। औद्वाहिकं जामातृतया श्वशुरादितो लब्धं तस्यैवेत्येवकारात् न्यूनविद्याविद्यव्यवच्छेदः माधुपर्कि कमार्त्विज्यलब्धभार्य्याधनस्य स्त्रीधनत्वाद्विभागाप्रसक्तेरन्यथा व्याचष्टे। भार्य्याप्राप्तिकाल इति। यतः शौर्य्यभार्य्याधने विद्या धनप्रसादलब्धधनस्य एतान्यविभाज्यानि अत एतानि हित्वा अन्यद्विभजेदिति वचनार्थं दर्शयति। एतानीति। अन्यद्विभजे दिति वचने नास्ति कुतो विवृतमत उक्तं अनुवर्त्तत इति। अश्व तो मूर्खः ॥०॥

विभृयादित्येकवचननिर्द्देशाद्यदि विद्यामभ्यस्य तो भ्रातुः कुटुम्बमपरो भ्राता स्वधनव्ययशरीरायासाभ्यां सम्वर्द्धयति तदा तद्विद्योपार्जितधने तस्याप्यधिकारः।

तथा वैद्योऽविद्याय नाकामो दद्यादंशं स्वतो धनात्। पित्र्यं द्रव्यं समाश्रित्य न चेत्तेन तदर्जितम्। पित्र्यपदं साधारणधनपरम्। तदनाश्रित्यार्जितम्। वैद्योऽविद्यायानिच्छन्नदद्यात्।

वैद्याय विदुषे पुनः साधारणमन्तरेणाप्यर्जितं दद्यादेव।

तथा गौतमः। स्वयमर्जितमवैद्येभ्यो वैद्यः कामं न दद्यात्। असाधारणधनशरीरव्यापारार्जितं स्वयमर्जितमविद्वद्भ्यो दातुमनिच्छन् न दद्यात् विद्वद्भ्यः पुनर्दद्यादेव। एतच्च विद्याधनमात्रविषयम्।

तदाह कात्यायनः। नाविद्यानान्तु वैद्येन देयं विद्याधनात् क्वचित्। समविद्याधिकानान्तु देयं वैद्येन तद्धनम्। तन्त्रोच्चरितविद्यापदमुभाभ्यां समाधिकपदाभ्यां सम्बध्यते तेन समविद्याधिकविद्याधिकानां दातव्यम्। न्यूनविद्याऽविद्ययोः पुनरनधिकारः॥ ०॥

विभृयादित्येकेति। इतरनैरपेक्ष्येण भरणकर्तृत्वस्य एकवचनबललभ्यत्वादिति भावः। इतरनैरपेक्ष्यस्य साधारणधननैरपेक्ष्यं तद्भ्रातुरसाधारणनैरपेक्ष्यस्य तेनाश्रुताभ्यां द्वाभ्यां त्रिभिर्वा भरणे सर्वेषामेव तेषामंशितेति। समाश्रित्येति एतच्च भोजनाच्छादनातिरिक्तधनाश्रयणपरन्तदर्थन्धनोपघातस्य गृहस्थितेनाप्यवश्यकर्त्तव्यत्वात्। साधारणधनपर

मिति । अन्यथा पितामहादिधनोपघाते विभागानुपपत्ते रिति भावः । अवैद्यायेति विशेषणस्वरसलभ्यार्थमाह । वैद्या येति । एतस्यैव विवरणम् । विदुषेइति । एतच्च स्वयमर्जितस्य विद्याधनमात्रेति । तदतिरिक्तस्वयमर्जितस्य तु विदुषोऽविदुषोवा अदेयत्वादिति भावः । तच्चोपचरितमिति । सच्च दुपचरितमित्यर्थः । उभाभ्यामिति । समविद्यत्वच विद्ययैव साम्यावगतेरधिकेत्यत्रापि विद्ययैवाधिक्यमवसीयते । नतु धर्मान्तरेण अनुषङ्गापेक्षया अध्याहारस्य कल्पने गौरवा दिति भाव.॥०॥

तदेवमादिवचनैर्विद्याशौर्य्यादिधनेष्वपि साधा रणधनोपघातानुपघाताभ्यां विभागाविभागयो रवगमात्तस्यैव प्रयोजकत्वात्तत्पदवत्येव श्रुतिः कल्पनीया। उपघातार्जितं विभजेदिति। न पुनः शौर्य्यादिपदवत्यपि । अवश्यकल्पनीयसामान्य श्रुतिकल्पनयैवोपपत्तेः । होलाकाधिकरणन्याय स्यायमेव विषयः । यद्वा न्यायप्राप्तएवायमर्थोयद्वे नार्जितन्तत्तस्मिन् जीवति तस्यैवासति विशेष वचने। यत्र पुनः साधारणधनमात्रेणैकस्य व्यापा रोऽपरस्य धनशरीराभ्यान्तत्रैकस्यैकोभागोऽपरस्य

भागद्वयं न्यायावगतमेव निबद्धम्। एतेन चैतदपि सिध्यति। यत्साधारणधनोपघाते सति यस्य यावतोऽ ग्रस्य स्वल्पस्य महतोवोपघातः तस्य तदनुसारेण भागकल्पना कार्य्या ॥ ० ॥

तस्यैवोपघातानुपघातार्जितत्वस्यैव प्रयोजकत्वात्। विभागे उपघातार्जितत्वस्याविभागे चानुपघातार्जितत्वस्य प्रयोजकत्वात्। कल्पनीयां श्रुतिमाह। उपघातार्जितमिति अनुप घातार्जितं न विभजेदिति तु श्रुतिर्न्न कल्प्यते। तत्रान्येषां स्वामि त्वाभावेन विभागाप्रसक्तेः तदभावस्य सिद्धत्वात्। सामान्य श्रुतीति। शौर्य्यादिपदशून्योक्तश्रुतिकल्पनयेत्यर्थः। शौर्य्यादि पदवती उपघातेन शौर्य्यार्जितं विभजेदित्येवंरूपश्रुतिकल्पने गौरवात्। न्यायमूलत्वमाह। यद्देति। धनसाधारण्ये व्यापार साधारण्ये वा भागयन्तरस्य विभागोक्तेरनियमे व्यभिचारमा शङ्क्याह। असतीति। तथाचायमुत्सर्गइति भावः। विशेष वचनस्य समविद्याधिकेत्याद्युक्तमेव न्यायश्चात्र उपघातार्जिते अर्जकस्य द्वंशित्वाभिधानात् अनुपघाते तदधिकस्य सर्व्वस्यैव यहणं युक्तमित्येवंरूपः। यस्य यावतइति। विभिन्नजातीय भ्रातृसाधारणधनोपघातार्जिते ब्राह्मणीपुत्रस्य चतुर्णामंशानां क्षत्रियादीनाञ्च त्रिद्व्येकांशानामुपघातस्तत्र स्वस्वांशसमर्थ

स्वमेव तेषामंशकल्पनमित्यर्थः । कात्यायनवचने एकत्र प्रतिवासिन इति श्रुतेरेकत्र वास एव नियामको न साधारणधनार्जितत्वम्। तथाच कथं न्यायमूलत्वमित्याशङ्क्याह्यापि न्यायमूलत्वं व्यवस्थापयति ॥ ० ॥

किञ्च कात्यायनवचनम् । विभक्ताः पितृवित्ताच्चेदेकत्र प्रतिवासिनः । विभजेयुः पुनर्द्व्यंशं स लभेतोदयो यतः । इदं संसृष्टस्य साधारणधनोपघातेनार्जकस्य भागद्वयं इतरेषामेकैको भाग इति श्रीकरेण व्याख्यातम् । तेनानुपघातार्जितमर्जकस्यैव धनम् । संसृष्टत्वेऽपि न पुनस्तद्धनं साधारणमित्यभिप्रायो मुनेर्व्याख्यातुश्च लक्ष्यते अनुपघातार्जिते भागविशेषानभिधानात् । एवञ्चेत्संसृष्टवदविभक्तस्यापि तथात्वमेव युक्तम् । विभागप्रागभावे तत्प्रध्वंसेऽपि एकत्र प्रतिवासस्य हेतोरविशेषात् । साधारणधनोपघातार्जितेऽर्जकस्य भागद्वयमिति ज्ञापनार्थत्वेन वचनस्याप्युपपत्तेः । न केवलं संसृष्टविषयत्वं युक्तम् । ढोकाधिकरणस्यात्रैव जागरूकत्वात् ॥ ० ॥

भृगुराहेतिशेषः। गृहोपस्करेति। उपस्करः कटककुण्डलहारादि स्वर्णादीति केचित्। वाह्यं वलीवर्दादि। गृहादिकर्मिभिरिति। गृहादिकर्म्मशिल्पिभिर्यद्गृहादिशिल्पकरणनिमित्तशिल्पिरूपभर्त्त्रादिप्रेरणार्थमित्यर्थः न च स्वयमेवस्त्रिया गृहादिशिल्पेन यन्मूल्यं लब्धन्तत्कथं न व्याख्यातमितिवाच्यम्। तस्य प्राप्तं शिल्पैस्तु यद्वित्तम्प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यन्तत्र शेषन्तु स्त्रीधनं स्मृतमित्यनेन स्त्रीधनत्वनिरासात्। तत्र भर्त्तुरेवाधिकारात्। बन्धुदत्तमिति वचनस्य चप्रकरणात् स्त्रीधनविषयत्वादितिश्रन्यथाव्याख्यातम्। भर्त्त्रादिप्रेरणार्थमिति। उत्कोचः कथं शुल्कमुच्यतैव शुल्कत्वादत आह। तदेवेति। व्याजोक्तं वेति। वासमञ्चये। तत्वेति। एतेन वक्ष्यमाणासुरादिविवाहपात्रशुल्कपरत्वाभावमस्य सूचितमृच्छेयरादिपुरस्कृतम्प्राचीनमतं दूषयति। नपुनरिति। आसुरमात्रेति। तथाचासुरादीत्यादिना राक्षसपैशाचयदपि समञ्जतमितिभावः। आसुरमात्रे शुल्कं नेतरयोरित्युक्तार्थे प्रमाणमाह। यथोक्तमिति। शुल्कमाहचर्य्यादासुरादिचिपु यद्बन्धुदत्तादिधनन्तदेव भ्रातृगामीतियत्कैश्चिदुक्तन्तदपि दूषयति॥०॥

अतोराक्षसादौ शुल्काभावात् शुल्कसाहचर्य्येणासुरादिष्वेव यद्धनन्तन्मात्रस्य भ्रातृगामित्वाभिधानं

देयं। तथाच तस्य स्त्रीधनत्वाभावाच्च पित्रादि गृहीतधनस्य च शुल्कत्वेन कीर्त्तनात्।

तथा मनुः। न कन्यायाः पिता विद्वान् गृह्णीया च्छुल्कमण्वपि। गृह्णन् हि शुल्कं लोभेन स्यान्नरोऽप त्यविक्रयी। पितेत्युपलक्षणम्। तेन भ्रात्रादिरपि धनं गृह्णन् शुल्कग्राही तेन पित्रादिगृहीत परमेव शुल्कं भवति इत्युक्तं। अतोयदुक्तमासुर एव शुल्क रूपस्त्रीधनसम्भवात्तदेकवाक्योपात्तयोर्ब्बन्धुदत्ता न्वाधेययोरप्यासुरविवाहगोचरयोरेव भ्रातुरधि कार इतिनिरस्तम्। किन्तूक्तशुल्कस्त्रीधनस्य सर्व्व विवाहेष्वेव सम्भवात्। सर्व्वत्रैव भ्रात्रधिकारो वाक्यात् विशेषानवगमात्। तथा गौतमवचनमपि कात्यायनसमानार्थम् यथा। भगिनीशुल्कं सोदर्य्या णामूर्द्ध मातुः पूर्व्वं चैके। अस्यार्थः। प्रथमं सोदर्याणा न्तेषां पुनरभावे मातुः। पूर्व्वं चैक इतिपरम तम्॥०॥

अत इति। राक्षसादावित्यादिना पैशाचपरिग्रहः तथाच तयोः शुल्काभावात् तत्रादत्तर्थेण तदुभयसम्बन्धिधनस्य भ्रातृगामित्वाभिधानमसङ्गत्या देयमित्यर्थः अथादिपदम

पक्षाच्च आसुर एवेति वक्तव्यमित्यत आह। तथैति। उपलक्षण मिति कन्यादातृमात्रोपलक्षणमित्यर्थः। शुल्कमाहर्ष्या दिति। यदुक्तं। तस्य राक्षसादावादिपदग्राह्ये शुल्काभाव दोषेण हेयतोक्ता अधुना पुनरासुरमात्रोयमन्वुद्दत्ताद्धि धनं शुल्कमाहर्य्यात् भ्रातृगामीति मतं निरस्यति। अतइति यतः शुल्कं कन्यादातुरेव न कन्याया अतइत्यर्थः। किन्त्विति। गृहोपस्करइत्यादिना यदानेतुमित्यादिना चोक्तइत्यर्थः एषु शुल्कपरिभाषाया अप्यतदेव प्रयोजनमप्रयोजनान्तरस्या दृष्टत्वात् इत्यपि बोध्यम्। वाक्यादिति। सामान्यएव बन्धुदत्त मित्यादिवाक्यादित्यर्थः। विशेषाश्रवणात् आसुरादिविशेषा श्रवणात्। कात्यायनसमानार्थमिति। पितृभ्याञ्चैव यद्दत्त मित्यादिकात्यायनसमानार्थमित्यर्थः गौतमवचनमाह। भगिनीशुल्कमिति। अत्र शुल्कपदेन पारिभाषिकशुल्कस्यैव ग्रहणं शास्त्रीयपरिभाषाया अन्तरङ्गत्वेन शीघ्रोपस्थिति कत्वात् नतु मूल्यरूपस्येति भावः। परमतमिति। सोदराग न्तरं पितुः तदनन्तरं मातुरिति परमतमित्यर्थः॥०॥

अतः प्रथमं सोदराणाम्। तदभावे मातुः मातु रभावे पितुः। एषां पुनरभावे तद्धनभर्त्तुः।

यथा कात्यायनः । बन्धुदत्तन्तु बन्धूनामभावे भर्तृगामि तत् । बन्धूनामभावइत्यनेन भ्रातुरभाव इतिसूचितम् । भ्रातुरभावे पितुर्धनाधिकारात् । दण्डापूपन्यायात्तत्सिद्धेः । भर्तृपर्य्यन्ताभावे पुनरिदमुच्यते ।

यदाह बृहस्पतिः । मातुः स्वसा मातुलानी पितृव्यस्त्री पितृस्वसा । श्वश्रूः पूर्व्वजपत्नीच मातृतुल्याः प्रकीर्त्तिताः । यदासामौरसोन स्यात्सुतो दौहित्रएव वा । तत्सुतोवा धनन्तासां स्वस्रीयाद्याः समाप्नुयुः । औरसपदेन पुत्रकन्ययोरुपादानम् । तयोः सर्व्वापवादकत्वात् । सुतपदेन सपत्नीपुत्रस्य सर्व्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्व्वास्ताः स्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति स्मृतेः नतु सुतपदमौरसविशेषणम् । वैयर्थ्यात् । सपत्नीपुत्रसद्भावेऽपि स्वस्रीयाद्यधिकारापत्तेश्च । औरसपुत्रकन्ययोः सपत्नीपुत्रस्य चाभावे दौहित्रस्याधिकारिता । तत्सुतइति तच्छब्देन पुत्रसपत्नीपुत्रयोरुपादानम् । तेन तत्पुत्रयोरधिकारोन तु दौहित्रस्यापि । तस्य पिण्डदाने वहिर्भावात् ॥ ० ॥

स्वमतमुपसंहरति। अतः प्रकृतमिति। तेषां भ्रातृमातृपितॄणामभ्युदत्तं मातापितृदत्तम्। भ्रातुरभावइति। भ्रातुरभावएव पित्रोरधिकारात्तयोरभावे भर्त्रधिकारे प्रतिपादिते भ्रात्रभावे तदधिकारस्य दण्डापूपन्यायासिद्धत्वादिति भावः। औरसपदेनेति। विशेषणीभूतलिङ्गपरित्यागे हेतुमाह। तयोरिति। तथाच लिङ्गस्य विवक्षणे पुत्राभ्यन्तर कन्याधिकारविधिविरोधः स्यादितिभावः। एतच्च दत्तिमादेरप्युपलक्षणम्। सपत्नीपुत्रस्येति। तद्भगिन्या अपीति बोध्यम् पुंस्त्वस्याविवक्षितत्वात्तस्य अपि स्वपुत्रदारेण भर्त्रादिपुरुषत्रय पिण्डदातृत्वादिति। सपत्नीपुत्रस्याभावे दौहित्रस्याधिकारितेति ॥ ० ॥

तदेषां पुत्रादीनां भ्रात्रादिभर्तृपर्य्यन्तानामभावे सत्स्वपि श्वशुरभ्रातृश्वशुरादिषु सपिण्डेषु भगिनीपुत्रादीनामधिकारिता। अनन्यगतेर्वचनात्। स्त्रीणां मातृतुल्यत्वप्रतिपादनेनामीषां पुत्रतुल्यत्वज्ञापनेन पिण्डदातृत्ववचनस्य दाय प्रकरणे धनाधिकारज्ञापनैकप्रयोजनत्वात्। तत्र स्त्रीयाद्याइतिवचनात्। भगिनीसुतस्वभर्तृ भागिनेयदेवरपुत्रभ्रातृश्वशुरपुत्रभ्रातृसुतजामातृ

देवराणाम्पूर्व्वपूर्व्वस्याभावेऽपरस्याधिकारे देवरस्यैव सर्व्वशेषेऽधिकारापत्तेर्महाजनविरोधइति। वस्तुबलमालम्ब्यवचनं वर्ण्यते ॥ ० ॥

अयुक्तमेतत् दौहित्रस्योपदिष्टप्रजात्वेन स्वभोग्यभर्तृपिण्डदातृत्वेन च प्रागधिकारस्यैवोचितत्वात्। वन्ध्याविधवादुहितृसत्त्वेऽपि प्राग्दौहित्राधिकारस्योक्तत्वात्। अत्र पत्नी दुहितर इत्यत्र बहुवचनबलात्। दुहितुरभावे दौहित्रस्याधिकार इति स्वोक्तविरोधाच्च तस्मात्सपत्नीपुत्रवन्ध्याविधवादुहितृणां प्रागेव युक्तादौहित्राधिकार इति बोध्यम्। अतएव तत्सुत इत्यत्रापि पाठक्रमेण याज्ञवल्क्येन वन्ध्यादिदुहितृसपत्नीपुत्रदौहित्रेभ्योऽर्थान्तुकधनं प्रागधिकारस्योक्तत्वात्। नच दौहित्र एवेत्यत्र एवकारशब्दाभ्यां जघन्यत्वावगमात्। वाचनिकएव सपत्नीपुत्रानन्तरं दौहित्राधिकार इतिवाच्यम्। श्रीरघुनन्दनस्य सपत्नीपुत्रपरतायामेव स्वारस्यत्वसिद्धाप्रमाणाभावात्। नचैवं सपत्नीपुत्रसत्त्वेऽपि भगिनीपुत्रस्याधिकारः स्यादितिचेद् तन्मध्ये पित्राद्युपादानाभावात्। तत्सत्त्वेऽपि तर्हि किन्न स्यात्। अथ भर्तृपितृभ्रात्रधिकारानन्तरं संहितायां लिखनात्तेषामभावएवैषामधिकार इतिचेत्तर्हि पुत्राद्यनन्तरस्यापि सुतरां प्राप्तेरनर्थकमेवोरसाद्युपादानमौरसादीरसादिपदं पूर्व्वपूर्व्वा

धिकारिमाचोपपत्तत्वेषामधिकारक्रमस्य वचनान्तरेणैव प्राप्तास्तांश्चानूद्य तेषामनन्तरं भगिनीपुत्रादीनामधिकारमात्र बोधकं वृहस्पतिवचनमितिरहस्यम्। भर्त्तृपर्य्यन्तानामभाव इत्यादिनोक्तमुपसंहरति। तद्देषामिति। दौहित्रान्तमध्ये स्थलायां श्वशुरभ्रातृश्च श्वशुरादेरगणनात् तेषु सत्सु इत्युक्तम्। वस्तुबलमिति। उपकारकत्वरूपं वस्तुबलमित्यर्थः। उक्तवस्तु बलस्य धनहरणप्रयोजकत्वे मानमाह ॥ ० ॥

तत्र मनुना। त्रयाणामुदकं कार्य्यन्त्रिषु पिण्डः प्रवर्त्तत इति दायभागप्रकरणे कीर्त्तनात्।

याज्ञवल्क्येनापि पिण्डदोंशहरश्चैषामिति पिण्डदानेनाधिकारदर्शनात्। पुत्रस्यापि सातिशय पिण्डदानेन नरकत्राणकारणतया मुख्यभावेनाधिकारावगतेः।

मातुलोभागिनेयस्य स्वस्त्रीयोमातुलस्य च। श्वशुरस्य गुरोश्चैव सख्युर्मातामहस्य च। एतेषां चैवभार्य्याभ्यः स्वसुर्मातुः पितुस्तथा। श्राद्धदानन्तु कर्त्तव्यमिति वेदविदां स्थितिरिति वृद्धशातातप वचनादमीषां पिण्डदत्वप्रतिपादनादयं पिण्डदान विशेषादधिकारक्रमः। तत्र प्रथमन्देवरस्त्रिपिण्ड

तद्भर्तृपिण्डतद्भर्तृदेयपूर्व्वपुरुषत्रयपिण्डदातृत्वात्स पिण्डत्वाच्च तद्धनेऽधिक्रियते ॥ तदभावे भ्रातृश्व शुरदेवरयोः सुतस्तत्पिण्डतद्भर्तृपिण्डतद्भर्तृदेय पूर्व्वपुरुषद्वयपिण्डदातृत्वात् सपिण्डत्वाच्च पितृ व्यस्त्रीधनेऽधिकारी। तदभावे त्वसपिण्डोपि भगिनी पुत्रः तत्पिण्डतत्पुत्रदेयतत्पित्रादिपिण्डत्रयदा नाम्मातृस्वसृधनेऽधिकारी। तदभावे स्वभर्त्तृभागि नेयः पुत्रात् भर्त्तुर्दुर्व्वलत्वात्। तत्स्थानपातिनो रपि तथैव बलाबलस्य न्याय्यत्वात्। तद्भर्तृदेयपूर्व्व पुरुषत्रयपिण्डदानात्तत्पिण्डदानात्तद्भर्तृपिण्डदा नाच्च मातुलानीधनेऽधिकारी। तदभावे भ्रातृ सुतस्तत्पितृपितामहयोस्तस्याश्च पिण्डदानात्पितृ स्वसृधनेऽधिकारी। तस्याप्यभावे श्वशुरयोः पिण्ड दानाज्जामाता श्वश्रूधनेऽधिकारी॥०॥

त्रयाणामिति। अधिक्रियते अधिकारी भवति। ननु स्व स्त्रीयः पित्रादित्रयपिण्डदाता भर्तृभागिनेयश्च श्वशुरादि त्रयपिण्डदाता तयोश्च तुल्यपिण्डदातृत्वे कथम्भर्तृभागिने यस्य स्वस्त्रीयबाधतारत्यतआह। पुत्रादिति। पुत्रत्वा तिदेशेन पुत्रदेयपिण्डत्रयदातृत्वेन च स्वस्त्रीयस्य पुत्रस्य

पातिताभर्त्तृदेयपिण्डत्वयद्दातृत्वेन भर्त्तृभागिनेयस्य भर्त्तृस्वत्वे पातितेत्यर्थः। तथाच न्यायबलेनैव भर्त्तृभागिनेयस्य स्वत्वीय बाध्यतेतिभावः ॥०॥

अयं क्रमोग्राह्यः स्वस्त्रीयाद्याइति न क्रमार्थं किन्त्वधिकारिमात्रज्ञापनार्थपरम्। एषांपुनरेतेषामभावे श्वशुरभ्रातृश्वशुरादेः सपिण्डानन्तर्य्यक्रतोधनाधिकारोबोद्धव्यः। नच सपिण्डाभावे सतीदं वचनमिति वाच्यम्। अस्यामधिकारिशृङ्खलायान्देवरदेवरसुतयोर्भ्रातृश्वशुरसुतस्य चाधिकारज्ञापनात्। आसन्नतरश्वशुरादेः परित्यागादतोवचनार्थापरिज्ञानक्रतोव्यवहारः प्रमाणपरतन्त्रैरतन्त्रीकर्त्तव्यइत्यति गदनमुक्तमप्रजास्त्रीधनम्॥०॥

वचनार्थापरिज्ञानेति। उक्तमनुयाज्ञवल्क्यवचनयोस्तात्पर्य्यार्थापरिज्ञानक्रतइत्यर्थः व्यवहारः स्वस्त्रीयाद्याइति पाठक्रमेणाधिकारव्यवहारः प्रमाणपरतन्त्रैः प्रमाणैकवापेक्षैः स्वतन्त्रमप्रयोजकमप्रमाणमिति यावत्। अप्रजायं स्त्रीधनाधिकारक्रमनिर्णयस्तत्र कन्याधने प्रथमं सोदरभ्रातुस्तदभावे

मातुस्तदभावे पितुरधिकारः वरदत्तातिरिक्तवाग्दत्ताधने स्वर्ग्गवरदत्तधने तु वरस्याधिकार इति ऊढायायौतकधने प्रथमं कुमारी तदभावे वाग्दत्ताऽधिकारिणी एतयोरभावे ऊढयोः पुत्रवतीसम्भावितपुत्रयोर्युगपदधिकारः। एकस्या अभावेऽपरस्याः एतयोरभावे वन्ध्याविधवयोस्तुल्याधिकारः एकाभावे चापरस्याः ततः पुत्रदौहित्रपौत्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राणां क्रमेणाधिकारः इत्यन्ये मन्यन्ते सपत्नीपुत्रानन्तरं दौहित्रस्याधिकार इति विशेषः ततो ब्राह्मादिविवाहपञ्चकसमयलब्धयौतकधने भर्त्ता भ्राता माता पिता चेतिक्रमः आसुरादिविवाहत्रयसमयलब्धयौतके माता पिता भ्राता भर्त्ता चेतिक्रमः ततो देवरः ततो देवरपुत्रभ्रातृश्वशुरपुत्रौ ततो भगिनीपुत्रः ततो भर्त्तृभागिनेयः ततो भ्रातृपुत्रः ततो जामाता ततः श्वशुरः ततो भ्रातृश्वशुरः ततश्चानन्तर्य्यक्रमेण सपिण्डाः ततः सकुल्याः ततः समानोदका इति यौतकातिरिक्तेऽपि पितृदत्ते प्रथमं कुमारी ततः पुत्रः ततः पुत्रवतीसम्भावितपुत्रे ततो दौहित्रपौत्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राः ततो वन्ध्याविधवा च युगपदधिकारिण्यौ ततो भर्त्रादिक्रमेणैव पूर्ब्ववत्क्रमः पितृदत्तातिरिक्तेऽयौतकधने तु पुत्रकुमार्य्योर्युगपदधिकारः तयोरभावे पुत्रवतीसम्भावितपुत्रयोः ततः पौत्रदौहित्रप्रपौत्रसपत्नीपुत्रपौत्रप्रपौत्राः क्रमेणाधिकारिणः

ततो वन्ध्याविधवा च युगपदधिकारिण्यौ [illegible] पूर्ववत् भ्रात्रादिक्रमइति ॥ ० ॥

सम्प्रति विभागानधिकारिणः कथ्यन्ते। तत्पर्युदासेनाधिकारिज्ञापनार्थं।

तत्रापस्तम्बः। सर्व्वे हि [redacted] भागिनो द्रव्यमर्हन्ति। यस्त्वधर्म्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोपि तम भागं कुर्वीत। इदम्बालकेनाकुलीकृत्य पठितम्। यस्तु धर्म्मेण द्रव्याणि प्रतिपादयति ज्येष्ठस्तमपि त्व समभागं कुर्वीतेति तदनाकरम्। तथाऽप पात्रितस्य रिक्थपिण्डोदकानि निवर्त्तन्ते। अप पात्रितोभिशोदकोक्तः।

तथा बृहस्पतिः। सवर्णाजोप्यगुणवान्नार्हः स्यात्पैतृके धने। तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते। उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः। अतस्तद्विपरीतेन नास्ति तेन प्रयोजनम्। तया गवा किं क्रियते या न धेनुर्न गर्भिणी। कोर्थः पुत्रेण जातेन योन विद्वानधार्म्मिकः। शास्त्रशौर्यार्थरहितस्तपोविज्ञानवर्जितः आचारहीनः पुत्रस्तु

मूकोऽथारसमस्तु सः (आपस्तम्बः) पित्रादेरौर्द्ध्व देहिकस्य कर्म्मणोऽसंस्कृतः सुतः श्रेष्ठेन परोवेद पारग इति पुन्नाम्नोनरकात्त्रायत इत्यादिवचनेन पुत्रकर्त्तृकतया महाफलश्रुतेस्तत्कर्म्मवेतनं धन सम्बन्धित्वं अतस्तदकुर्व्वतः कुतोवेतनं ॥०॥

अथ दायभागोनिरूपणीय इति प्रतिज्ञायामनधिकारि निरूपणमप्रस्तुतमत आह । तत्पर्य्युदासेनेति । तथाच तद्विपाधिकारिकतया दायभागनिरूपणे तदपि प्रकृतमेवे तिभावः । ज्येष्ठोऽपीति । प्रतिपादयतीत्यनेनान्वयः बालेन तथाचा निबन्धकारेणेत्यर्थः । भिन्नोदकीकृत इति । पाति त्यादिदोषेण येन सहैकमुदकं न पीयते व्यवहारानर्ह इति यावत् । उत्तमर्णाधमर्णेभ्य इति । धर्म्मपरायणैर्हि उत्तमाना मेव पितॄणां अधमानामृणदातॄणामवश्यापाकरणीयत्वेन ऋणत्वस्याभिधानादित्यर्थः । बहुवचनन्तु व्यक्तिभेदात् । असंस्कृतो ऽनुपनीतः महाफलश्रुतेरित्यनन्तरं महानिष्टनिवारणश्रुते श्चेत्यपि बोद्धव्यमेतेनाप्युन्नामनरकत्राणस्य पुत्रकर्त्तृत्वाभावेऽपि न क्षतिः ॥०॥

अतएवाह मनुः । सर्व्वएव विकर्म्मस्था नार्हन्ति भ्रातरो धनम् । तथा अनंशौ क्लीवपतितौ जात्यन्ध

ताच कुमारीणामधिकारावगमाच। तत्पुत्रीपुत्रकाराभावे न्यायविरोधाच । सामान्येन प्राप्तिर्याज्ञवल्क्यवचनादपी त्याह॥०॥

तथा याज्ञवल्क्यः। अप्रजास्त्रीधनम्भर्त्तुर्ब्राह्मादिषु चतुर्ष्वपि। दुहितॄणाम्प्रसूता चेच्छेषेषु पितृगामि तत्। ब्राह्मादिषु विवाहेषु यच्चाध्यमध्यग्निधनं स्त्रिया तत्तस्यां मृतायामप्रथमं दुहितॄणामेव तत्रापि प्रथमं कन्यायास्तदभावे प्रत्तायास्तदभावे परिणीतायाः सर्व्वदुहित्रभावे च पुत्रस्याधिकारः। अप्रजा स्त्रीधने भर्त्तुरधिकारात्। बृहस्पतिना त्वप्रत्तापदे नाप्रत्ताद्यभावे समूढाया अप्यधिकारः सूचितः॥०॥

तथेति। ब्राह्मादिषु चतुर्षु ब्राह्मेण सह पञ्चसु विवाहेषु भर्त्तुः शेषेषु आसुरादिषु पितृगामि प्रसूता चेत्तदा दुहितॄणा मर्थात् सर्व्वत्रेत्यर्थः। प्रथमं कन्याया इति पूर्व्वोक्तवचनैकमूल त्वादिति भावः। तथाच दुहितृपदं दौहित्रपरं अन्यथा मातुर्दुहितरः शेषमित्यनेन पौनरुक्त्यापत्तेरिति मिताक्षरोक्तं युक्तमिति वाच्यम्। मातुर्दुहितर इत्यस्याध्यग्निविषयत्वेनोप संहारकतया तदतिरिक्तपरिणयनलब्धविषयतया च तस्यो

पुनरुक्तत्वात् । तच्च च षण्णावशिष्टरूपविशेषानन्तरमन्यथा धिकाराय च सार्थकत्वात् । तद्वचनं कन्याधिकारार्थमिदन्तु समूढाधिकारार्थमित्यपुनरुक्तिरिति केचित् तदसत् । उभयचैव दुहितृपदमात्रश्रुतेरविशेषादुभयाधिकारस्यैकेनैव सिद्धेरपरवचनवैयर्थ्यस्य दुःपरिहरत्वात् । दुहितृणामेवेति । गत यौतकधनवत् पुत्रदुहित्रोरित्यर्थः । मनुवचनबलात् दुहि चभावएव भर्त्तुरधिकारप्राप्तेः कथमेतरापुत्रस्याधिका इत्यत आह अप्रजास्त्रीधनमिति । ननु गौतमवचनात् यौत कधने समूढापर्य्यन्तानान्दुहितृणामधिकारोऽस्तु । अयौतके तु । स्त्रीधनन्तदपत्यानां दुहिता च तदंशिनी । अप्रत्ता चेत्स मूढा तु न लभेन्मातृकन्धनमिति वृहस्पत्युक्तेर्न समूढानां भ्रात्रादिसत्वेऽधिकारः स्यादित्याशङ्कायान्तद्वचनस्यैवार्थ विवेचनेन तत्र समूढाधिकारे प्रमाणमाह । वृहस्पतिनेति अप्रत्तापदेनेति । अयमभावः । अप्रत्तापदस्य दुहितृपरं समूढानिषेधेनैव दुहितुरप्रत्तात्वलाभात् किन्तु । अप्रत्ता चेद्वर्त्तते तदा समूढा न लभेदित्येवार्थः । तथा चाप्रत्ताभावे समूढाधिकारो वृहस्पतिना प्रतिपादितइति । अप्रत्ताया दुहितुरधिकारितायां पुत्रसमत्वात् अप्रत्ताभावे प्रतिपादिते अर्थात्पुत्राभावोऽपि प्रतिपादितइत्येतदुक्तम् अप्रत्ताप भावइति । ब्राह्मादिविवाहेन भार्य्यात्वं प्राप्तायाधनविषय गोचरमेव वचनमिति मिताक्षरोक्तमपाकर्त्तुमाह इत्ते ॥ ० ॥

नच यौतकमात्रधनाभिप्रायेण नेदं वचनम् किन्तु। ब्राह्मादिविवाहेन विवाहितायायद्यावद्धनं यौतकमयौतकं वा तदभिप्रायेणेति वाच्यम्। बन्धुदत्तमिति वचनस्य निर्विषयतापत्तेः मनुविरोधाच्च यदाह मनुः। ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम्। अप्रजायामतीतायाम्भर्त्तुरेव तदिष्यते। यत्त्वस्याः स्याद्धनन्दत्तं विवाहेष्वासुरादिषु। अतीतायामप्रजायां मातापित्रोस्तदिष्यते। अस्याः स्याद्दत्तमिति पराचीनं पूर्व्वत्रानुषज्यते। तेन विवाहेषु यद्धनन्दत्तमिति सम्बन्धाद्वैवाहिकधनमात्रप्रतीतेर्नयावद्धनविषयत्वं।

तथा यमः। आसुरादिषु यद्द्रव्यं विवाहेषु प्रदीयते। विवाहक्रियायाम्पूर्व्वापरीभूतायां यद्द्रव्यम्प्रदीयतइति यौतकधनमात्रगोचरत्वमेव प्रतीयते। नच विवाहात्पूर्व्वापरतोवास्त्रिया लब्धस्याप्रजोस्त्रीधनस्य गतेरश्रूयमाणत्वात्। ब्राह्मादिपदं स्त्रीधनपरमिति वाच्यम्। पूर्व्वापरलब्धस्य स्त्रीधनस्य विस्तरेण गतेर्वक्ष्यमाणत्वात्॥ ०॥

चेति। नेदं वचनमिति। अप्रजास्त्रीधनभर्त्तुरिति याज्ञवल्क्यवचनमित्यर्थः। बन्धुदत्तमिति वचनञ्चेति। बन्धुदत्तं तथा शुल्कमन्वाधेयकमेव च। अप्रजायामतीतायां बान्धवास्तदवाप्नुयुरिति वक्ष्यमाणबान्धवपदोपात्तभ्रात्रधिकारबोधकवचनञ्चेत्यर्थः। निर्विषयतेवेति। तथाच्यनेन वचनेन भवत्प्रमते भ्रात्रधिकारसिद्धेरित्याशयः। अथ तद्विरोधादस्यो मर्गवचनस्य बन्धुदत्तशुल्केतरविवाहपूर्व्वसमयलब्धविवाहोत्तरपुत्रादिदत्तविषयत्वमस्त्वित्यतआह। मनुविरोधाच्चेति। अनुपद्यत इति। ननु प्राजापत्येषु इत्यनन्तरभार्य्यात्वप्राप्तापादइत्यध्याहारोऽनुपपत्तिरया तस्य गुरुत्वादिति भावः। एवं चैतदेकवाक्यतया याज्ञवल्क्यवचनेऽपि दत्तमित्यस्यैवाध्याहारोचितोन तु भार्य्यात्वं प्राप्तायाइत्यस्येतिभावः। न यावद्धनविषयत्वमिति। यौतकेतरधनेभर्त्तृसत्त्वेऽपि पित्राद्यधिकारस्य वक्ष्यमाणत्वादितिभावः। विवाहक्रियायामिति। पूर्व्वापरीभूतायां वृद्धिश्राद्धाद्यधिसप्तपदीगमनपर्य्यन्तमित्यर्थः। यौतकायौतकयप्रजस्त्रीधनाधिकारिणोरित्यप्रजस्त्रीधनाधिकारिणोविवक्षुः प्रतिजानीते॥०॥

सम्प्रति अप्रजास्त्रीधनाधिकारिणः कथ्यन्ते। अप्रजास्त्रीधनभर्त्तुर्भ्राह्म्यादिषु चतुर्ष्वपि। ब्राह्म

चादिर्येषाञ्चतुर्णां ते दैवार्षप्राजापत्यगान्धर्वाश्च त्वारोऽभ्राह्मेण सह पञ्च भवन्ति। ब्राह्मदैवार्षगान्धर्व्व प्राजापत्येष्विति मनुना पञ्चानामुक्तत्वात्। तेषु विवाहेषु वर्त्तमानेषु यद्धनं स्त्रिया लब्धन्तदप्रजायामतीतायां भर्त्तुरेव भवतीति। प्रजा सन्ततिः। न पुनर्ब्राह्मादिना परिणीतायायत् यावद्धनं विवाहात्पूर्व्वं परतोवा तया लब्धन्तत्सर्व्वं भर्त्तुरिति व्याख्यानं युक्तम्। ब्राह्मादिष्विति कालार्थत्वान्निर्द्देशस्य ब्राह्मादिपदानां स्त्रीपरत्वे एकत्वेन षष्ठ्या च निर्द्देशः स्यात्। यत्त्वस्याः स्यादिति स्त्रियाएकत्वेन षष्ठ्या च निर्द्दिष्टत्वात्। विवाहकाललक्षणायाञ्च वर्त्तमानसम्बन्धेन लक्षणा स्यात्॥ ०॥

भवतीति। ब्राह्मेणसहेति। तद्गुणसम्विज्ञानबहुव्रीहिणा दैवादयश्चत्वारोऽधिकारसमुचितेन ब्राह्मेण सह पञ्चेत्यर्थः। उक्तार्थकल्पने हेतुमाह। ब्राह्मेति। तथाच मन्वेकमूलत्वानुरोधादतद्गुणसम्विज्ञानबहुव्रीह्याश्रयणमिति भावः। न पुनरित्यादि। उक्तस्यापि युक्ततराभिधानाय पुनः कीर्त्तनन्तदेवाह। कालार्थत्वादिति। निर्द्देशस्य ब्राह्मादिपदस्य कालार्थत्वात् विवाहस्य दानाधिकरणत्वबाधेन ब्राह्मा

ष्टिकालबोधकत्वात् । गोषु दुह्यमानास्वागतइत्यादौ सति सप्तमीस्थाने दुह्यमानादीनामागमनक्रियाव्यवच्छेदकाधीन दोहना दिक्रियाकाललक्षणायामिरूढत्वादिति भावः। ननु ब्राह्मादि पदानां स्त्रीष्वेव कुतोन लक्षणा स्यादत्याह। ब्राह्मादिपदाना मिति। स्त्रीपरत्वे ब्राह्मादिविवाहेन विवाहितस्त्रीपरत्वे। एकत्वे नेति। ब्राह्मादिपदं यदि स्त्रीपरं तदा अस्यारति उत्तर वचनस्थेन सामानाधिकरण्यानुरोधात् एकत्वेन षष्ठ्या च निर्देशः स्यादिति भावः। दूषणान्तरमाह। विवाहकाल लक्षणामिति। वर्त्तमानसम्बन्धेनेति। वर्त्तमानः कालस्तत्र विवाहस्य यः सम्बन्धोऽधिकरणत्वं तद्रूपेण लक्षणा स्यादि त्यर्थः ॥०॥

स्त्रीपरत्वे चातिक्रान्तविवाहक्रियासम्बन्धेन लक्षणा जघन्या। साचायुक्ता। नच विवाहित स्त्रीवाचकत्वं ब्राह्मादिपदानान्तल्लक्षणविवाह परत्वेन मन्वादिभिर्निर्द्दिष्टत्वात्तदाह।

मनुः। अष्टाविमान्समासेन स्त्रीविवाहान्निबोधत इत्युपक्रम्य। ब्राह्मोदैवस्तथैवार्षः प्राजापत्यस्तथा सुरइत्यादि। तथा नारदः। अष्टौ विवाहावर्णानां संस्कारार्थम्प्रकीर्त्तिताः। ब्राह्मस्तु प्रथमस्तेषा मित्यादि।

तथा विष्णुः । अष्टौ विवाहाभवन्ति । ब्राह्मोदैव इत्यादि । अतोविवाहकाललब्धस्त्रीधनविषय न्ब्राह्मादिवचनमिति विश्वरूपोक्तमादरणीयं । आसुरादिविवाहसमयलब्धन्तु स्त्रीधनं जीवत्यपि भर्त्तरि माता गृह्णीयात्तदभावे पिता । मातापि त्रोस्तदित्यत्र इत्यत्र क्रमावगतेः । युगपदधिकारे पित्रोरित्येवाभिदध्यात् ॥ ० ॥

अतिक्रान्तेति । अतिक्रान्ता या विवाहक्रिया तत्सम्बन्धेन तज्जन्यसंस्कारवत्त्वरूपेण । जघन्येति । विवाहाधिकरणका लत्वापेक्षया तज्जन्यसंस्कारवत्त्वस्य लक्ष्यतावच्छेदकस्य गुरुत्वादिति भावः । उपलक्षणं चैतत् । कालपरत्वे लक्षणा निरूढा स्त्रीपरत्वे पुनराधुनिकी लक्षणा तासु तद्वृत्तस्य तद्वा मस्य चाधारत्वबाधोपीति द्रष्टव्यः । केचित्तु अतिक्रान्तेति अतीत इत्यर्थः । अतीतत्वं हि वर्त्तमानध्वंसप्रतियोगित्वं तथाच वर्त्तमानकाललक्षणापेक्षयाऽतीतविवाहक्रियासम्बन्धेन लक्षणायां ध्वंसप्रतियोगित्वरूपाधिकपदार्थप्रवेशेन गौरवादिति भावइत्याहुः । ब्राह्मादिपदानां स्त्रीषु लक्षणामसहमाने त्याह । नचेति । स्त्रीवाचकत्वमिति । दारादिपदवन्नियत पुंल्लिङ्गत्वमेषामित्याशयः । माता गृह्णीयादिति । एवञ्च शेषेषु

पितृगामि तद्दिति याज्ञवल्क्यवचने पितृशब्दविशेषो द्रष्टव्यः यद्यपि धनसम्बन्धस्य प्रत्येकपरिसमाप्तत्वेन साहित्यसम्भवेऽपि पाणिभ्यान्नूपुरवक्रेत्यादाविव द्वन्द्वबलात् सहत्वप्रतीतौ युगपत्तुनाधिकार एव प्रतीयते । तथापि । पित्रोरित्यनेनापि तथार्थसिद्धेर्मातापित्रोरितियत् क्रमाभिधानन्तन्मातुरभावे पितुरिति क्रमिकार्थमेवेत्याह । युगपदिति । पित्रोरिति । सकृदुच्चरितपितृपदस्य जनकत्वेन लक्षणया युगपदुभयोपस्थितिसम्भवादितिभावः ॥ ० ॥

कन्याधने च मातुरभावे पितुरधिकारश्रवणात् । अत्रापि तथात्वस्यैवोचितत्वात् । तथा बौधायनः । रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम् । तदभावे भवेन्मातुस्तदभावे भवेत्पितुः । तदनेन कन्याधनं व्याख्यातम् । नच कन्याधनइवात्रापि प्रथमं भ्रात्रधिकारः स्यादिति वाच्यम् ॥ ० ॥

ननु क[illegible]ायायाम्प्रमाणाभावादत्रापि प्रातिपदिकपितृपदात् प्रथमञ्जनकत्वस्य पुंस्त्वेनोपस्थितौ पश्चाद्द्विवचनोपनीतद्वित्वान्वयानुपपत्त्यैवैकशेषकल्पनया मातुरुपस्थितिरिति